Calcutta Oriental Series

No. 3

# HARILÎLÂ

BY

VOPADEVA

With the commentary

OF

MADHUSUDANA SARASVATI.

Calcutta Oriental Series

No. 3

# HARILÎLÂ (हरिलीला)

BY

## VOPADEVA

With the commentary

OF

MADHUSUDANA SARASVATI



EDITED

BY

PANDIT ISVARA CHANDRA SASTRI

Sankhya Vedanta Nyaya Darsana Tirtha

AND

PANDIT HARIDASA VIDYABAGISA



CALCUTTA

1920



[Price Re. 1 [illegible]

## CALCUTTA ORIENTAL SERIES

| | | | | | |
|---|---|---|---|---|---|
| No 1 | Yukti Kalpa-Taru | Price R | 2 | 8 | 0 |
| No 2 | Chanakya Rajaniti Sastram | | 0 | 14 | 0 |
| No 3 | Haridila Viveka | | 1 | 4 | 0 |

प्राप्तिस्थानम् ।

संस्कृतयन्त्रपुस्तकालय, ३० कर्णओयालिस ष्ट्रीट,

कलिकाता ।

This work gives in the form of *Sutras* a synopsis of the whole of the *Srimad Bhagavata* and follows chapter by chapter the essence of the tradition and philosophy embodied in that sacred book

The author is Vopadeva and the commentary has been prepared by that master mind Madhusūdana Sarasvati, the celebrated author of so many philosophical treatises and commentaries Madhusudana Sarasvati's commentary is characterized by his interpretation of philosophy in terms of the *bhakti marga*, and as such, it will be of special interest to all students of Vaishnava lore Alike in its detailed analysis and the exposition in a nutshell of the philosophical issues the book deserves to be a *vade mecum* for those interested in Sanskrit philosophy

---

# अवतरणिका।

यद्यप्यवनिवलये श्रीभागवतानां श्रीभगवत्तत्त्वरत्नाकराय माना: शतश: ग्रन्था: सन्ति। तथापि हरिलीलेयं लीलावतारस्य भगवतो हरेरन्वर्थावगाहिनो। श्रीमद्भागवतस्य विषयनिचयानां करकपित्थवदवबोधाय विद्वद्वरेण वोपदेवेन हरिलीलेयं भक्तजनमानसमन्दिरे लीलानन्दप्रवर्द्धनार्थं प्राणायि। अत्यल्पायासेन भागवतदुरूहपदार्थानाम् अनया लीलया सम्यक् ज्ञानं श्रीभगवत् साक्षात्काररूपं येन समुपजायते तथैव विद्वत् प्रवरेण वोपदेवेनाति नैपुण्येनेयं समटङ्कि। श्रीमद्भागवतस्य स्कन्धाध्यायेषु ये ये विषया: सन्निबद्धा: सन्ति तेषां सर्व्वेषाम् अस्मिन् सन्दर्भे सूत्राकारेषु सूचिता मेखलासु मणय इव सन्ति।

दर्शनशास्त्रीयसूत्रवदस्या लीलाया सर्व्वाण्येव सूत्राणि धीरमनोहराणि। भगवत्करुणापीयूषपिपासु-सूरीणामग्रे श्रीमद्भागवत तद्विषयस्य च परिचयप्रदानं पिष्टपेषणवन्निरर्थकमेव। भागवतविषयनिकरसूचीभूतेयम् आनन्दस्य हरेर्लीलैतद्ग्रन्थकर्त्रा विदूषा वोपदेवेनेदमभाणि। कोऽसौ विद्वदुत्तसो वोपदेवद्विजाग्रणीरिति मुक्ताफलभूमिकायामचिरादेव कियन्तस्तद्ग्रन्था कतम जनपदं स्वजनुषाऽलञ्चकार कदा किं पुस्तकमलेखि इत्यादि वृत्तान्तनिकरं प्रकटयिष्यामि।

अस्यास्तु सपादेयत्वेन परमहंसपरिव्राजकाचार्य्य-श्रीमन्मधुसूदनसरस्वती-महाभागेन नैजासाधारणपाण्डित्यवैभवेन 'हरिलीलाभाष्यविवरणं' नाम व्याख्याऽकारि। परमपरिव्राजकसरस्वतीमहाभागस्याद्वैतवादित्वेऽपि परमभागवतत्वमप्यव्याहतत्वं दृश्यते तथाहि श्रीमद्भगवद्गीता सुबोधिनी नाम व्याख्याया

"कृष्णात् परं किमपि तत्त्वमहं न जाने" तत्रैव "कालिन्दीपुलिनेषु यत् किमपि तन्नीलन्तमो धावति"(२)। एवमद्वैतसिद्धिर्नाम वेदान्त-रत्नाकरे "स्वयं विजयते विष्णुर्विकल्पोज्झित." एवमेव भक्तिरसा-यनादिष्वस्ति। तदीयग्रन्थास्तु —श्रीमद्भगवद्गीताव्याख्या 'सुबोधिनी' (१) भक्तिरसायनम् (भागवतसारसंग्रहः)। (२) प्रस्थानभेदः "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति" इत्यादिश्लोकस्य व्याख्यानभूतः। (३) अद्वैतसिद्धिः (ब्रह्मतत्त्वराष्ट्ररक्षणे दुर्गभूता)। (४) सिद्धान्तबिन्दुटीका। (५) शिवविष्णुात्मकमहिम्नस्तवटीका। (६) श्रीमद्भागवतप्रथमश्लोकत्रयटीका (एषा वङ्गे मुद्रिता)। (७) कृष्णकुतूहलनाटकम् (श्रीकृष्णलीलावर्णनात्मकं बुधहृदय-हारिरूपकम्)। (८) संक्षेपशारीरकव्याख्या। (९) वेदान्तकल्प-लतिका (सन्दर्भोऽयं वेदान्तमतप्रतिपादनप्रसङ्गेन नानादर्शन मतख्यापनपरः पूर्व्वोद्देशमात्रशेषोऽस्ति)। (१०) राजप्रतिबोधः। (११) शाण्डिल्यसूत्रटीका। (१२) आनन्दमन्दाकिनी। (१३) वेद-स्तुतिटीका। (१४) जटाद्यष्टविकृतिः। (१५) आत्मबोधटीका। (१६) अद्वैतरत्नलक्षणम्। (१७) शास्त्रसिद्धान्तलेशटीका। एभ्योऽन्येऽपि बहवो ग्रन्थास्तैर्महाभागैर्विरचिताः सन्तीति लोकश्रुतिरस्ति।

हरिलीलाया अस्या श्रीमद् वोपदेव मधुसूदनसरस्वतीप्रणीत मूल व्याख्यानत्वेन भक्तिसुधासागरभागवतविषयरत्नपरिपूर्णत्वेन च वैष्णवजनगणपरमोपकाराय क्षुद्रग्रन्थत्वेऽपि यत्नेन मुद्राप्यते।

इदानीं श्रीमन्मधुसूदनमुनेरितिवृत्तं पूर्व्ववङ्गीय फरिदपुर-नगरान्तर्गत कोटालिपार-पल्लीान्तःपाति, यजुर्व्वेदीयकाश्यपगोत्र पाश्चात्यवैदिकब्राह्मणानां कुलग्रन्थ वैदिकवाद मीमांसा'सन्दर्भतो यथालब्धं तत्रैव किञ्चिल्लिख्यते।

(१) पञ्चदशोत्तरैकादशशतशकाब्दे (१११५) ख्रीष्टाब्दे (११९४) महम्मदघोरी नाम्ना यवनराजेन कान्यकुब्जेश्वरं जयचन्द्रं (जयन्त चन्द्र (२)) विजित्य यवनधर्म्मप्रचारायार्य्यगणान् स्वधर्म्मं दीक्षयामास। तदानीं भूयांसो ब्राह्मणाः (३) स्वधर्म्मरक्षार्थं ततोऽपि समन्तात् पलायनपरा बभूवुः। तेषु चाध्वर्य्यु काश्यपगोत्रीयो राममिश्रः सहपुत्र कलत्रैः पूर्व्वस्यान्दिशि आससार। स च कतिपयमासादनन्तरं गिर्व्वाणवाणी-नगरीं नवद्वीपस्थलीं भागीरथी तटभूमिमाप। तत्र गौड़ेश्वराणामनुमतिमग्रहारञ्चोपलभ्योवास। ततो वख्तियारखिलजी नाम्ना यवनपतिना पश्चिमवङ्ग समाक्रान्ते तदाऽनारब्धे धर्म्मविप्लवे तत्रैव मिश्रमहाभागो निरुपद्रवं वासमकरोत्। तदीयतनयो गोपालमिश्रस्तत्सूनुर्माधवमिश्रस्तत्सुतः सनातनमिश्रस्तत्पुत्रो गणपतिमिश्रस्तदात्मजो गुणार्णवाचार्य्यः। अयमौपयामिकप्रसङ्गेन वङ्ग यशोहर पत्तनमागत्य श्वशुर-सदने कालमनैषीत्। तदङ्गसम्भूतः पुरन्दराचार्य्यो वङ्गे माधवपाशा राजभवने लब्धानिमन्त्रणो गमन प्रतिगमनकाले फरिदपुर-नगरान्तर्गत-कोटालिपाडाख्य पल्ली सुमनोहरा विप्रवासोपयोगिनीमवेक्ष्य तत्रोनशियाख्यग्रामे निवासमकरोत्। अद्य

(१) एषहत्तान्त सन्दर्भ पण्डितोत्तम श्रीहरिदासमिद्धान्तवागीश-महाशय सकाशाल्लब्ध स्तत्पन्थस्तु ततमन्निधावस्ति. यशोहर खुलना नवापुरे।

(२) कान्यकुब्जेश्वर राठोरवंशाय श्रीचन्द्रपति। अथ वाराणसीपुराधीश कथास्तिस्मत। अन्येषां मत काश्मीराधिप एतस्य सभाया विख्यात श्रीहर्षकवर्जनक श्रीहीरसूरिरासीत। पञ्चविंशत्युत्तर द्वादशशत सम्वत्काले उत्कीर्ण शिलालेखे जय चन्द्रस्यनामास्ति। दिल्लीश्वरानङ्गपाल दुहितुः पति विजयचन्द्र जयचन्द्रस्य जनक।

(३) सारस्वता कान्यकुब्जगौड़ मैथिलकोत्कला।

पञ्चगौडा समाख्याताविन्ध्योत्तरवासिन। स्कन्दपुराणम।

त्वेऽपि अस्य वासभवनस्य स्थाननाम 'पुरन्दरवाटिका' इति लोके प्रसिद्धिरस्ति। अनेन सूरिमहाभागेन स्ववास-वाटिका प्रत्यासन्ने मन्त्रशास्त्रोक्त 'पञ्चमुण्डो'परि विश्वजननी श्रीदक्षिणामूर्त्तिकालिका देवी प्रत्यस्थापि। सा तत्राधुनापि लोकैः पूज्यते। तत्रैषा देवी पुरन्दराचार्य्यीयेति लोके जेगीयते। पुरन्दराचार्य्यस्यात्मजा-श्चत्वारः (१) श्रीश्रीनाथ (२) यादवानन्दः (३) मधुसूदनः (४) वागीशचन्द्रश्च चतुर्थतनयः शैशवे पञ्चत्वमाप। अन्ये त्रयः कालपरिणत्या क्रमशः श्रीनाथचूडामणिः, यादवानन्दन्यायाचार्य्य, मधुसूदनसरस्वती च ते स्वस्वविद्या-वैशद्येन लब्धप्रसिद्धयः।

अथैकदा कोटालि-पल्लीमध्यगत माधवपाशा ग्रामाधिपसमीपे श्रीमत् पुरन्दराचार्य्ये सार्द्ध यादव मधुसूदन-सूनुभ्यां समुपस्थिते माधवपाशाधिपो मधुसूदनस्य लोकोत्तरवैदुष्यमवलोक्य विस्मितः सन्नपि तदीयावासभूभागब्रह्मशासनप्रदाने पराङ्मुख आसीत्। मनस्वि मधुसूदन एवम्विधाचरणं नृपतेरवलोक्य तमतिभर्त्सयन् शान्तिशतकीयश्लोकमिमं ('नाथे श्रीपुरुषोत्तमे') अपठत्। तेन जातखेदेन मधुसूदनेन नितरां विषयवैराग्यमन्वभावि। तत आचार्य्यपुरन्दरः क्षुण्णमानसः स्वगृहं ययौ। मधुसूदनस्तु जनक-सविधे अत्याश्रयमाश्रयं स निबन्ध प्रार्थनामकरोत्। तेनैव हि कुलोद्धरणक्षम विमलमति सूरि तनयमवेक्ष्य तस्मै सन्न्यासग्रहणं ऽनुज्ञाऽदायि। तेन लब्धानुमतिना मधुसूदनेन स्वप्रथित दण्ड भूमौ निपात्य भूलुण्ठित विश्वेश्वरमुद्दिश्य प्रणम्य च पुनस्तथैव कृत्वा ततो वाराणसी यात्रामकरोत्। तथाच वैदिकवादमीमांसायाम्,—

'स्वप्रमाण स्थितो दण्ड पातयित्वा शिवं नमेत्।
तथापि न पुनर्दण्डं पातयित्वा पुनर्नमेत्॥' इति।

ततो गमनकाले मध्यमार्गे यशोहरग्रामे मधुमतीनदीमुत्तर्त्तु-मनसेन मधुसूदनेन तदा वरुणदेवमाराध्य तत्प्रसादात् स्वप्ने लब्ध आदेशः—'वत्स। यथेच्छं गन्तव्यम न कापि नद्युत्तरणे बाधा भविष्यति'। इति वरुणदेवादेशवाणीं विश्वास्य तेन हेलया मधुमतीमरिदुत्तारि। अनेन च व्यापारेणास्याः शैवलिन्या 'मधुमती'ति नामाभूदिति लोके तत्राभाणकोऽद्यत्वेऽपि वर्त्तते। ततः षड्मासादनन्तरं मोक्षनगरीं काशीं समाप्य परिव्राजकाचार्य श्रीमद् विश्वेश्वरसरस्वतीसन्निधौ यथाविधान यतिधर्म्मं दीक्षितः। तथाच महिम्नस्तव प्रारम्भोक्त वैदिकमीमांसाधृतः श्लोकः —"गुरु विश्वेश्वरं नत्वा" (१) इत्यादि। एवमेवाद्वैत-सन्दर्भावसाने —"श्रीरामविश्वेश्वरमाधवानाम् ऐक्येन साक्षात्कृत-माधवानाम्। स्पर्शेण निर्धूततमो रजोभ्यः, पादोत्थितेभ्यस्तु नमो रजोभ्यः॥" इत्यनेन तेन स्वगुरु पूर्व्ववर्त्तीना नामोल्लेख कृतः। ततो गुरुसेवनाध्ययन योगानुष्ठान ब्रह्मचर्य्यादिभिरत्यल्पसमये स सुगृहीत नामा यतिरभूत्। एतस्मिन्नेव काले भारते राम-नामामृत धारा प्रवर्षकेन श्रीमत्तुलसीदासेन हिन्दीभाषा-पद्यमय रामायण प्रणीयपरीक्षणार्थं मधुसूदनसन्निधौ प्रेषयामास। तद्रामनामामृताप्लुतं शास्त्रतत्त्वप्रोथित पाण्डित्यकौशलपूर्णं परिशुद्धं रामायणं समीक्ष्य परितृप्तः मधुसूदन इमं श्लोक विलिख्य तद्रामायणमाकमप्रैषीत्। तथाहि—

(१) महिम्न स्तोत्र टीका प्रारम्भ श्लोक।

यथैव तुलसीदासेन स्वरचित रामायण मधुसूदनसरस्वती सन्निधौ दर्शनार्थं प्रेषितस्तथा तेनापि स्वप्रणीताद्वैतसिद्धिप्रभृतय ग्रन्थाः तुलसीदास समीपे स्वलोकनार्थं प्रेरिता इति काशीकनिदृषा परम्परागत समाचार।

"आनन्दकानने काश्यां तुलसी जङ्गमस्तरुः ।
कवितामञ्जरी यस्य रामभ्रमर भूषिता ॥" इति ।

ततः एकदा दिल्लीश्वरो मधुसूदनस्याशेषगुणगौरवपूर्णवृत्तं श्रुत्वा एव षोडशशताब्द्याः ( शकाब्दा १६०० ) शेषभागे सम्राट्-परिषदि सन्निमन्त्र्यानयामास । तत्र विद्वत्सभायाम श्रेष्ठान् विदुषो वादे सर्व्वान् पराभूय तेषां प्रशंसासूचकगाथामिमां लेभे । तथाच, –

"वेत्ति पारं सरस्वत्या मधुसूदनसरस्वती ।
मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती ॥" (१)

तत्रत्य ( पाश्चात्यवैदिक ) यजुर्वेदीयकाश्यपगोत्रसम्भूतविप्राणां कुलपरिचायकग्रन्थ एव दृश्यते उक्तसरस्वतीमहोदयसप्तोत्तरशत-मिते हायणे हरिद्वारे लोकमेतं परित्यज्यामरलोकं ययौ । श्रीमन्मधुसूदनवंशजा काव्यनाटकादिनानासन्दर्भटीकाकृत् वाग्मि कविवर श्रीहरिदास सिद्धान्तवागीशाशेषशास्त्राध्यापक-पण्डितवर-कालिदासविद्याविनोदनैयायिकवर श्रीहरिदासतर्कतीर्थभट्टाचार्य्या अद्यत्वेऽपि राजन्ते । तदन्वयजा सन्त्यन्ये वङ्गेषु बहवोऽधुनापि विद्वांस ।

१५ । ४ । २० खृष्टाब्दा
१३२७ । १ । १ वङ्गाब्दा
कलिकाता ।

ईश्वरचन्द्रशास्त्री ।

(१) श्लोकोऽयं तुलसीदासेन विरच्य मधुसूदनसरस्वती रचितग्रन्था-वलोकनात् परं तत्समीपे प्रेषित इति काशीकवीविद्वानां सम्वादः ।

# मन्तव्यः ।

श्रीहरिलीलाविवेकग्रन्थस्य रचयिता विद्वद्वरवरेण्यज्ञानाटवी पञ्चास्यो वोपदेवः भाष्यकारश्च स्वनामधन्य-भक्तिरसरसिकः निगमकल्पतरुशाखामञ्जरिसुवर्णा मधुसूदनसरस्वती। वोपदेवेन गोविन्दाङ्गभूत श्रीमद्भागवतस्य स्कन्धाध्यायविवरणावली षड्-दर्शनसूत्राणीव सुशृङ्खलया सज्जिता, भक्तिवल्लीप्रसूनरसविलासि मधुसूदनो मधुसूदन. स्वभाष्यरश्मिभि तासाम् अतिगूढ-रहस्यम् उद्घाट्य भक्तिरसपिपासून् जनान् आस्वादयितु मधुचक्र मिव अवसरपदवी प्रापयामास। इन्द्रनीलमणिखचित सुवर्ण-हारस्तयोः कथञ्चित शाखाचन्द्रन्यायेन सादृश्य समर्थयितु मर्हति। एकादशस्कन्धस्य विस्तारतः भाष्य प्रकटय्यातिदुर्बोध तत्त्व "कृष्णात् पर किमपि तत्त्वमह न जाने" इति दिशा सुगमत्वेन जनान् प्रत्यबोधि। अपि च स्वामिटीकया अल मन्यमानो वोपदेवविरचित यत् मूल परितत्याज अङ्कनिर्देशेन तत् पूर्णता घटयामास। गोपवधूटीविट पर ब्रह्म स्वभाषा तस्य भाष्य अलञ्चकार इति मन्यामहे। भाष्यव्यवहृतग्रन्थाना अध्यायश्लोकादीना च विशेषपरिचय अस्माभिः पादटीकाया प्रदत्तः। भाष्यकृत् परिचयः सुराचार्य्यकल्प अशेषशास्त्रपारदर्शि पण्डित-श्रीईश्वरचन्द्रशास्त्रिणा बहुयत्नतः समाहृत्य प्रकाश्यतामत

नीत: । यस्य अर्थव्ययेन एतादृश कर्म्म अस्माभिः समापितम् । एम्, ए—रायचांद प्रेमचांद स्कलारादयुपाधिभिर्मण्डितं इंराजि-भाषाया बहुग्रन्थप्रणेतारं, कुशाग्रीयधियं कुमारं लाहाजं श्रीम न्नरेन्द्रं प्रति सम्प्रति कोऽपि परब्रह्म परां कृपां विदधातु ।

१०।५।२० खृ:
वङ्गाब्द १३२७।१।२

श्रीहरिदासविद्यावागीशस्य ।

श्रीगणेशाय नमः।

# सटीक-हरिलीला।

नमः कृष्णाय नित्यैकसच्चिदानन्द-मूर्त्तये।
जगत् सर्गविसर्गादि-साक्षिणेऽनन्तशक्तये॥ १॥

जयन्ति वोपदेवस्य वाचो विबुध-सम्मताः।
घनसारोज्ज्वलाभास-क्षीरोदस्येव वीचयः॥
श्रीमद्भागवतस्यानुक्रमणी तद्विनिर्म्मिता।
हरिलीलाभिधानेयं यथामति विविच्यते॥
श्रीमद्भागवतस्कन्धाध्यायार्थादिनिरूप्यते।
विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये॥

इह कश्चिद्गुरुप्रसादादधिगतसमस्तशास्त्रार्थतत्त्वो वोपदेव नामा द्विजाग्रणीः श्रीमद्भागवतार्थं विवरिषुः प्रतिजानीते।

श्रीमद्भागवतञ्च स्कन्धाश्च अध्यायाश्च तेषामर्थः श्रीमद्भागवताद्यर्थः आदिर्यस्य तत्तया। आदिशब्दात्सङ्गाप्रकरणाऽव-तारार्थोपपत्तयः। श्रीमदिति हेतुगर्भविशेषणम्। सुन्दरत्वात् तन्निरूप्यते क्रियाविशेषणं वा। अन्यार्थस्याप्यस्य पूर्णकुम्भन्यायेन मङ्गलार्थत्वम्। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते न सिद्धार्थद्योतकानि सिद्धार्थाध्येतृकानि च (१)

(१) "मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्च" साङ्ख्यदर्शनम् ५। १ सू। पातञ्जल महाभाष्यम् १। १। १।

**आनन्दस्य हरेर्लीला(१)वक्ता भागवतागमः।**
**स्कन्धैर्द्वादशभिः शाखाः प्रतन्वन् द्विजसेविताः ॥२॥**

स्फुरति भाष्ये। यद्यपि भूयसा तदर्थाभ्यर्थनेन हेमाद्रितुष्टय इत्युक्तम्, तत्रापि स्वयोग्यतोपलक्षणपरं विज्ञेयम्। मन्त्री च राज्ञो देवगिरीश्वरस्य (२) रामचन्द्रस्येष्टदेवताप्रणामस्तत्कृत एवेति ग्रन्थसमाप्तिप्रचयाभ्यामवगम्यते। अन्यथा विघ्नोपघातात्तौ (३) नस्तः ॥ १ ॥

तत्र भागवतार्थमाह—

आनन्दस्येति। आनन्दस्यानन्तरूपस्यानेन लीलाया उपादेयत्वमुक्तम्। आनन्दस्य लीलामप्यानन्दरूपामित्यर्थः। सामानाधिकरण्यं धर्म्मधर्म्मिभावनिरासार्थम्। इदमेव भगवद्रूपम्। "विज्ञानमानन्दं ब्रह्मेति" (४) श्रुतेः। लीला वक्ष्यमाणरूपाम्। भागवतमेवागमो वेदः "इतिहासपुराणानि पञ्चमो वेद उच्यते"(५) इत्युक्तेः। तथाच भागवतमेवागमो वृक्षः। तदा वक्तेति तिर-

---

(१) हरेः परमेशस्य लीला हरिलीला,—कल्पप्रलयमहाप्रलयादिपतितलोकोद्धरणाय अवतरणादिव्यापारः। एतदाख्योऽयं सन्दर्भः।

(२) देवगिरिर्दक्षिणापथे यादववंश्यानां राजधानी आसीत्। तच्छेषनृपालो रामचन्द्रस्तस्य प्रधानामात्यो हेमाद्रिश्चतुर्वर्गचिन्तामण्याद्यनेकसन्दर्भकारः। वृत्तमेतस्य चतुर्वर्गचिन्तामणौ राजप्रशस्तौ मुक्ताफलटीकायाञ्चास्ति।

(३) त्रिविधं विघ्नं दिव्यं, नाभसिकं, भौतिकञ्च। दिव्यं दैवं ग्रहोत्पातादि। नाभसिकं उल्का, वज्र, झिल्लीन्द्रावरण, धूमकेत्वादि। भौतिकं व्याघ्रचौरप्रभृतिजम्। आधिव्याध्यादेस्तत्रैवान्तर्भावः।

(४) तैत्तिरीयोपनिषद् ३।५।१, ३।६।१।

(५) "इतिहासपुराणं पुष्पम्"—"इतिहासपुराणमभ्यतपन्"—"इतिहासपुराणम्" छान्दोग्य उप. ३।४।१, ३।४।२, ७।१।२४, ७।२।१।

स्कृतात्यन्तावाच्यध्वनित्वात् प्रकाशयित्येत्यर्थः। यथा उपदिशति कामिनीनां यौवनमद एव ललितानि इत्यत्रोपदिशति प्रकाशयति तेन भागवतद्रुमे हरेर्लीला प्रतीयत इत्यर्थः। वेदद्रुमाभ्याम् अस्य साम्यमाह, स्कन्धैः सावयवैः। शाखाः कठाद्याः। लताद्या लताश्च। प्रतन्वन् विस्तारयन्। द्विजास्त्रैवर्णिकाः पक्षिणश्च तौ (१) त्वचा ताच्छील्य परेण शास्त्रस्यलीलयैकप्रतिपादनशीलत्वादन्यस्य भक्तिज्ञानादेरिहैवान्तर्भाव इत्युक्तम्। तेन लीलैव प्रतिपाद्या नान्यत्। यो हि मन्यते भगवत् कथा मात्र प्रतिपाद्यम्, तेनात्र सर्ग इत्यादेर्निर्विषयत्व प्रतीयमानसर्गाद्यपह्नवः। कर्त्तुर्महर्षेरशाकौशलमिति दोषत्रयमभ्युपेतं स्यात्। तस्मात् सुव्यक्तं लीलां वक्तीति। नन्वत्र किं प्रमाणं किञ्चास्य लक्षणमित्यर्थः। 'सा च द्वितीय-दशमे दशधा दर्शिता तथा' ?। सा च लीला द्वितीयस्कन्धस्य दशमेऽध्याये दशधा दर्शिता। तच्च दर्शितत्वं प्रमाणं सर्गादिदशरूपत्वञ्च लक्षणमित्यर्थः। तदेवाह,—

अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः॥ (२)

एषां लक्षणं वक्ष्यते। एकैकत्राव्यासेर्दर्शनाम्मुक्तिः। एते चोत्तरोत्तरमङ्गाङ्गित्वादाश्रयविशेष.। उक्तञ्च परमहंसप्रियाया (३)

---

(१) "ब्राह्मणः क्षत्रियो वैश्यास्त्रयो वर्णा द्विजातयः"। मनुव्यासौ, 'शकुन्त-शकुनद्विजा', अमरकोष।

(२) भागवतम् २।१०।१ श्लोक।

(३) परमहंसप्रिया नाम्नी सुप्राचीनकाचनसकलज्ञानिजन-समादृता भागवत-टीकासीत्। साचाद्यापि नोनयनपथ समारूढा पर बहुधाऽन्विष्यते। एतस्या उल्लेख कैवल्यदीपिकाया मुक्ताफलस्य व्याख्यायां अवसरदृश्यते। नैव सा श्रीधरी।

स्कन्धादयस्तृतीयादिस्कन्धेषूक्ता दशक्रमात् ।
श्रोतुर्वक्तुश्च लक्ष्माद्ये द्वितीये श्रवणे विधिः ॥ ३ ॥

मङ्गाङ्गिभावः (१) । तत्राशरीरस्य विष्णोः पुरुषरूपस्वीकारः सर्गः । पुरुषाद्व्यस्तादीनामुत्पत्तेर्विसर्गः । तेषामाधारस्य लोकप(स)ञ्चस्य व्यवस्थान स्थानम् । स्थितानामभिवृद्धिः पोषणम् । पुष्टानामाचारः ऊतिः । तत्रापि सदाचारो मन्वन्तरम् । तत्रापि विष्णुभक्तिरीशाणु-कथा । विष्णुभक्तानां प्रपञ्चाभावो निरोधः । निष्प्रपञ्चानां स्वरूपलाभो मुक्तिः । भक्तानां ब्रह्मस्वरूपेणावस्थानम् आश्रय इति । लीलात्वञ्चैषामप्रयासेन क्रियमाणत्वात् तत्र तत्र सशब्दनाच्च । नन्वनायासचेष्टितं लीला । लीलाश्रयस्य च वक्ष्यमाणभङ्ग्या ब्रह्मत्वात् कथं लीलात्व तथात्वे लीलातद्वतोरभेदप्रसङ्ग इति चेन्न । चिन्मात्रस्य वस्तुनो रज्जुसर्पन्यायेन प्रपञ्चाधिष्ठानत्वं तस्यैव लीलात्वेन विवक्षितत्वात् । ध्रुवं कल्पितबन्धनिवृत्तेर्मुक्तावपोति ॥२॥

एव ग्रन्थार्थमुक्त्वा स्कन्धार्थमाह ।—स्कन्धादय इति । क्रमश्च तृतीये सर्गः । चतुर्थे विसर्ग इत्यादि । लक्ष्म लक्षणम् । विधिः(२) इष्टं ज्ञातव्यमिति । न च सर्गादेस्तृतीयादिनियमत्वेन प्रथम-द्वितीययोरभावात् । लीलापरत्वोक्तिरव्यापिकेति वाच्यं "जगृहे पौरुषं रूप"मित्यादिना (३) तत्रापि सूचितत्वात् । न च मुक्ते-निरोधभेदस्य वक्ष्यमाणत्वाल्लक्षणत्वमिति युक्तम् । तद्भेदत्वे प्राधा-न्यात् पृथगुक्तिः ॥ ३ ॥

---

(१) अङ्गाङ्गित्वं शेषशेषित्वम्, "शेषपरार्थत्वात्" मीमांसासूत्रः ३।१ ।

(२) "विधिर्विधायक" न्यायसूत्रम् २।६२ । "अज्ञातज्ञापको वेद भागो-विधि." अर्थसंग्रहः १।३ ।

(३) भागवतम् १।३।१ श्लोक ।

इतीदं द्वादशस्कन्धं पुराणं ब्रह्म सम्मितम् ॥ ४ ॥
प्रथमेऽष्टादशाध्यायास्तत्र प्रकरणत्रयम्।
त्रिचिद्वादशभिर्लक्ष्य हीनमध्योत्तमं त्वतः ॥ ५ ॥
श्रोतारः शौनको व्यासः परीक्षिच्चोत्तमाः क्रमात्।
वक्तारोऽपि तथा सूतो नारदः शुक इत्यमी ॥ ६ ॥
वैराग्यस्य प्रकर्षेण प्रकर्षोऽत्र विवक्षितः।
तल्लक्षणं परं श्रोतुं वक्तुं चार्हति संहिताम् ॥ ७ ॥

उपसंहरति। इतीति। अतो हेतोरभिधेयानां द्वादशत्वाद्-द्वादशस्कन्धा इति भावः ॥ ४ ॥

एवं स्कन्धार्थमुक्त्वा प्रथमार्थं विवृण्वन् प्रकरणान्याह। प्रथम इति। तत्र प्रथमे स्कन्धे प्रथमं त्र्यादिभिरध्यायैरिति शेषः। त्रिभिरेकं त्रिभिरेकं द्वादशभिरेकम्। क्रमाच्च सम्बन्धः। नौवयो धर्म्मविषमूलमूलेतिवत् वि(द्वि)रूपशब्दसमभिव्याहारात् त्रि त्रीत्यत्र नैकशेषः। एवमन्यत्र। कुतः प्रकरणत्रयमेव तत्राह, लक्ष्यहीनमध्यमोत्तमत्वतः। लक्ष्यस्य श्रोतृ-वक्तृरूपस्य हीनमध्यमोत्तमत्वेन त्रैविध्या(१)दित्यर्थः। मध्यं मध्यमम। हीनानामना-देयतां वक्तुं त्रिभिरध्यायैः कृतम् ॥ ५ ॥

तत्त्रैविध्यमाह,—श्रोतार इत्यादि। तथा शब्दात् क्रमा-दुत्तमत्वम्। ननु (तु) राज्ञो महर्षिभ्यामप्युत्कर्षः ॥ ६ ॥

शुकस्य देवर्षेः सकाशादिति कथमुक्तं तत्राह,—अत्र एषु

(१) "अधिकारिभेदान्न नियमः" सांख्यसूत्रम् ३।७६। हीनमध्यमोत्तमा अधिकारिणः। "हीनमध्यमोत्तमोत्कृष्टधियो हि शिष्या भवन्ति' भामती, २।१८ सू., भा, टी,।

पुराणेष्वितिहासैर्हि लक्षणादेर्निरूपणाम् ॥ ८ ॥
वेदः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेवच ।
बोधयन्तीति हि प्राहुस्त्रिविद्भागवतं पुनः ॥ ९ ॥

श्रोतृ-वक्तृषु च वैराग्यप्रकर्षात् प्रकर्षोऽभिमतो न तु ब्रह्मर्षित्वादिनेत्यर्थः। स्पष्टोऽस्य सुखस्य तत्प्रकर्षः। रामस्तु वक्ष्यति। ननु किमेतत् कथनेनेत्याह। तल्लक्षण इति। हीनमध्योत्तमवैराग्याणां यस्य श्रोतुर्वक्तुश्च स तथा तत् तत्तुल्य इत्यर्थः। परं इदानीन्तनसंहितां भागवतीं सर्व्वथात्ववीतरागेण श्रुतमुक्तं वा न फले पर्य्यवस्यति ॥ ७ ॥

ननु प्रथमे श्रोतृ-स्वरूपलक्षणमिति न क्वचिद् ग्रन्थकृतोक्तम। तत् कुतोक्तं तत्राह। हिशब्दो हेतौ। लक्षणं हि सर्गप्रति सर्गादि (१)। आदिशब्दाद् धर्म्माधर्म्मौ। अयमर्थः लोके यथेदं कुरु मेदं कार्षीरिति साक्षाद्वाचो युक्तयः। नैवं पुराणेषु तत्र हि पूर्व्ववृत्तकथनभङ्ग्या प्रवृत्त्याद्युच्यते। न साक्षात्। तथा ह्युपदिश्यमान विश्वास्यं चमत्कार्य्यञ्च स्यादिति भावः ॥ ८ ॥

तदेव वृद्धानुमत्या दृढ़यति। इह हि अधिकारिभेदादुपदेशस्त्रिधा। आद्ये शब्दस्य प्राधान्यं द्वितीये त्वर्थस्य। तृतीये

---

(१) सर्गः सृष्टिः, प्रतिसर्गप्रलयः। "पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।
साङ्ख्यका॰ २१।
" " २२।
" भागवतम् २।१०। १४-१९।
" सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥" विष्णु, मत्स्य, ब्रह्माण्डपु॰।

पञ्चप्रश्नाः शौनकस्य सूतस्याचोत्तरं त्रिषु।
अवतारप्रश्नयोश्च व्यासस्यानिर्वृतिः क्रतात् ॥ १० ॥

रसस्य प्राधान्यम्। एषु च क्रमादुत्तमादयोऽधिक्रियन्ते। तत्र हि वेदः। प्रभुवत् पुरुषं बोधयति। यथा हि प्रभुवाक्येष्विष्टसाधनतामनालोच्यैव भृत्याः प्रवर्त्तन्ते। एवमग्निहोत्रादिष्ववश्यकर्त्तव्यत्वात् पुरुषः। पुराणं मित्रवत्। यथा मित्राणि मित्रं प्रभुवन्न नियुज्यन्ते किन्तु युक्त्या प्रबोधयन्ति। यथाऽमुष्मात् कर्म्मणः अमुकस्येदं फलममुकस्येदमासीदित्युपदेशः। पुराणेषु काव्यं प्रेयसीवत् सा हि यथा ललितचेष्टाभिः पुरुषमाकृष्य विधेये नियुङ्क्ते स एवावश्यन्तद्विधत्ते। तथा काव्यं विभावादि(१)सम्पदा पुरुष सरसीकृत्य रामादिवद्वर्त्तितव्यम्, न रावणादिवत्। ननु पुराणमात्रे प्रस्तुतोपयुक्ते किमन्ययोः। कथनेन तत्राह। त्रिब्रह्मागवतं पुनः। भागवतन्तु त्रिवत् त्रिभिर्वेदादिभिस्तुल्यं क्वचित् कस्यचिद् भङ्गिरित्यर्थः ॥ ८ ॥

एवं पुराणार्थमुक्त्वा क्रमात् पादैरध्यायार्थमाह। पञ्च प्रश्नाः प्रथमेऽध्याये इति शेषः। विवृताश्च ते परमहंसप्रियायाम्। तथा हि सूतं प्रति प्रथमाध्याये शौनकादिप्रश्नः। स पञ्चधा। सर्व्वशास्त्रार्थसारोद्धारप्रश्नभङ्ग्या नैमिषेत्यादिना विष्णूपासनाप्रश्नः। १। तस्य साकारनिराकारभेदात् सूत। जानासीत्यादिना साकारोपासनाप्रश्नः। २। तस्य श्रवणभेदाच्छ्रवणसिद्धये यस्यावतार इत्यादिना विष्णुलीलाप्रश्नः। ३। ततोऽन्तरङ्गत्वादथा-

(१) 'विभावेनानुभावेन व्यक्तसञ्चारिणा तथा।'
'रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः।'
इति साहित्यदर्पणम्।

**नारदस्यात्र हेतूक्तिः प्रतीत्यर्थं स्वजन्म च ।**
**सुप्तघ्नद्रौण्यभिभवः तदस्त्रात् पाण्डवात् बनम्॥११॥**

त्याहो त्यादिनाऽवतारकथाप्रश्नः । ४ । ततोऽप्यन्तरङ्गत्वात् 'कृतवानित्या'दिना श्रीकृष्णलीलावतारप्रश्नः । ५ । एषु चोत्तरोत्तरप्राधान्यम् । न तूत्तरेण पूर्व्वस्य बाधः । तदुक्तिवैयर्थ्यापत्तेः । एतावानेव श्रीभागवतप्रतिपाद्योऽर्थ इति । 'सूतस्यात्रोत्तरं त्रिषु' । एवं पञ्चसु प्रश्नेषु मध्ये आद्येषु त्रिषूत्तरं द्वितीयाध्यायार्थः । त्रिष्विति विषयसप्तम्याः सम्बन्धलाभात् त्रयाणामित्यर्थः । तत्रोत्तरं क्रमात् । "स वै पुंसाम्" । सत्त्वं रजः । स एवेदमित्यादिभिः अवतारप्रश्नयोश्च चकारादुत्तरम् । अवतारप्रश्नश्चावतारप्रश्नश्चेत्येकशेषः । तयोर्यद्यपि सामान्येनोक्तं तथाप्यवतारलीलाप्रश्नः । श्रीकृष्णलीलावतारप्रश्न इत्यर्थः । तयमुत्तर जगृहे पौरुषं रूप(१)'मेते चांशकला' (२) इत्यादिद्वाभ्याम् । हीन लक्ष्यमुक्त्वा मध्यममाह । 'व्यासस्यानिर्वृतिः कृतात्' । अनिर्वृतिरतुष्टिः । कृताद् भारतादेः ॥ १० ॥

'नारदस्यात्र हेतूक्तिः' । अत्रानिर्वृतौ । 'प्रतीत्यर्थं स्वजन्म च' । स्वजन्मनारदत्वप्राप्तिः । 'सुप्तघ्नद्रौण्यभिभवः' । सुप्तोऽन्यांश्च (न्यश्च) बालान् हन्तीति तथा । सुप्तघ्नत्वादभिभूतः । द्रौणिरिति द्रोणपुत्त्रत्वादवध्य इत्युक्तम् । 'परीक्षितोऽथ राजर्षे'रित्यन्तः प्राक् सर्व्वाध्यायशेषः । 'तदस्त्रात् पाण्डवाऽवनम्' । तस्य द्रोणेः अस्त्राद् अवनं रक्षा कुन्तीस्तुतिस्तु पाण्डवरक्षाप्रसङ्गात् । व्यासाद्यैरित्याद्युपोद्घातो नवमस्य । 'भीष्मस्य स्वपदप्राप्तिः' । यस्माद्

---

(१) भागवतम् १।३।१ श्लोकः ।
(२) भागवतम् १।३।२८ श्लोकः ।

इत्यष्टादशभिः पादैरध्यायार्थाः क्रमात् स्मृताः।
स्वपरप्रतिबन्धोनं राज्यं स्फीतं जहौ नृपः॥ १२॥
इति वैराग्यदार्ढ्योक्त्यै प्रोक्ता द्रौणिजयादयः॥ १३॥

भ्रष्टः संसारे पतितः तत् स्वयं पदम्। 'कृष्णस्य द्वारकागमः'। स्पष्टम्। 'श्रोतुः परीचितो जन्म'। श्रोतुरिति हेतुगर्भविशेषणम्। 'धृतराष्ट्रस्य निर्गमः'। हिमवन्तं प्रतीति शेषः। 'कृष्णमर्त्त्यं त्यागशुचा'। मर्त्त्यं शरीरं लोको वा। शुचा विषस्णार्ज्जुनदर्शनात्। राज्ञस्तत्स्फुर्त्त्या न तु अर्ज्जुनस्य तदा (या)। 'ततः पार्थमहापथः'। पार्थाः पाण्डवाः तेषां महापथो देवयानमुदग्दिग्गमनम्। 'भूधर्म्मयोः कलेर्भीतिः'। स्पष्टम्। 'ततस्त्राणं परीचितः'। ततः कलेस्त्राणं रचा भूधर्म्मयोरित्येव। 'परीचितो ब्रह्मशापः'। स्पष्टम्। 'प्रायोऽस्य शुकसङ्गमः'। सन्न्यासपूर्व्वमनशनं प्रायः। अस्य परीचितः॥ ११॥

इत्यष्टादशेति। नन्विह द्वादशभिरध्यायैरुत्तमे लच्येऽभिधेये किमित्यनङ्गानां द्रौणिजयादीनां समानाम् उपन्यासस्तत्राह। स्वपरेति। अयमर्थः राज्यं स्त्रीक बलवत्प्रतिबन्धवांस्त्यजेत्। इदं तावत्स्फीतं नाप्यत्र प्रतिबन्धः। स हि स्वीयैः परैर्वा स्यात्। न द्वेधापि। तथाहि स्वप्रतिबन्धाभावं वक्तुं धृतराष्ट्र-भीष्म-पार्थापगमोक्तिः। परप्रतिबन्धाभावार्थं भगवत्प्रयाणं द्रौणिजयोक्तिः। तस्मात् स्वपरप्रतिबन्धहीनं स्वीकृतं राज्य विष्णुपदप्रेप्सया जहाविति॥ १२॥

राज्ञो वैराग्यदार्ढ्यं वक्तुं द्रौणिजयादयोऽभिहिताः। नानङ्गत्वं तेषाम्। न च द्रौणिः पार्थप्रयाणस्योर्द्ध्वं राज्यं किं न प्रति-

**अथो विहायेममसुञ्च लोकं विमर्शितौ हेयतया पुरस्तात्। इति ॥ १४ ॥**

**इति हरिलीलायां वोपदेवकृतौ प्रथम-स्कन्धविवरणम् ॥ १ ॥**

**इति प्रथमोऽध्यायः ॥**

---

बन्धवानिति वाच्यम्। अभिभवादूर्ध्वं शास्त्र(१)सन्न्यासप्रति-ज्ञानात्। नापि ब्रह्मशापोद्विग्नेन राज्ञा राज्यत्यागात् कुतो वैराग्यमिति शङ्क्यम्? शापात् प्रागेव हेयोपादेयनिश्चयेन वैराग्य-सद्भावात् ॥ १३ ॥

यदुक्तमिति। शापस्य तु चिकीर्षितत्यागावसर एव परि-तोषाच्च। अतएवेह तत्प्रतीकारानुयो(द्यो)गः। यच्च भारते प्रतीकारकथनं तद्भिन्नकल्पविषयत्वादविरुद्धम्। तस्माद् राज्ञो वैराग्यप्रकर्षः सिद्धः ॥ १४ ॥

इति श्रीवोपदेवविरचित-हरिलीलाया मधुसूदनसरस्वती-प्रणीतं प्रथमस्कन्धविवरणम् ॥ १ ॥

( इति प्रथमोऽध्यायः ) ॥

---

(१) भागवत- १। १८। ५ श्लोकः।

द्वितीये श्रवणाङ्गानि ध्यानं श्रद्धा विमर्शनम् ।
द्वि द्वि षड्भिर्दशाध्याये ॥ १ ॥

एव प्रथमे वक्तृ-श्रोतृ-स्वरूपं निरूप्य प्रतिश्रवणे प्राप्तेऽङ्ग-सहितेऽङ्गिन्यनुष्ठिते फलमावश्यकमिति श्रवणाङ्गार्थं द्वितीयः कृत इत्याह । द्वितीयेति । श्रद्धाचित्तप्रसाधः । साप्यङ्गमेव । तत्-पूर्व्वत्वात्तत्प्रतीतेः । "श्रद्धत्स्व सोम्येति" (१) श्रुतेः । विमर्शनं युक्त्या पर्य्यालोचनं मननमित्यर्थः । एतानि श्रवणस्याङ्गानि । न चाङ्गत्वात् पूर्व्वं ध्यानादीनि ततः श्रवणं कार्य्यं शक्यम् । स्वरूपोपकारिणामेवाङ्गानां पूर्व्वभावित्वात् क्रताविव पुरोडाशा-दीनां फलोपकारिणाम् । पुनरवभृथादीनामिवोत्तरभावित्वात् । फलोपकारीणि च ध्यानादीनि यावदिमानि सम्यङ्निष्पद्यन्ते तावद्विकृतमपि श्रवणमापरोक्ष्येण पर्य्यवस्यति इत्यर्थः । इदमत्र तत्त्वम् । "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" (२) इत्यत्र शास्त्रेषु त्रयी गतिः । मनननिदिध्यासनाभ्यां फलोपकार्य्यङ्गाभ्यां श्रवणं नामाङ्गी विधीयते इत्येके । श्रवणमननाभ्यां फलोपकार्या-ङ्गाभ्यां निदिध्यासनं नामाङ्गी विधीयते इत्यन्ये (३) । त्रयाणामपि षड्यागवत् मम प्राधान्येन साक्षात्कारं प्रत्यङ्गत्वमित्यपरे । युक्तयो-ऽत्रानुसन्धेयाः (४) । तत्राद्यं पक्षमवष्टभ्येदमाचार्य्येणोक्तम् । श्रवणाङ्गानीति (५) । अथ प्रकरणान्याह । द्वि इति । द्वाद्वादिभि-र्ध्यानादीनि क्रमादित्यर्थः । दशाध्याय इति स्कन्धविशेषणम् ॥ १ ॥

(१) छान्दोग्य- ६ । १२ । २ स्रोक । (२) वृहदारण्यक २ । ४ । ५, ४—६ ।
(३) सिद्धान्तलेश—प्रथमाध्याये श्रवणविधिविचार. ।
(४) वृहदारण्यकभाष्यम् । २ । ४ । ५, ४—६ ।
(५) वेदान्तदर्शने शङ्करभाष्यम् । १ । १ । ४ सू ।

ध्यानं साधारणं हरेः ॥ २ ॥

देहेऽसाधारणे जीवैः ॥ ३ ॥

श्रद्धा श्रोतरि वक्तरि ॥ ४ ॥

उत्पत्तौ चोपपत्तौ च विमर्शस्तत्र देहयोः ॥ ५ ॥

अध्यायार्थानाह। ध्यानं द्विधा। जीवैः साधारणे हरेर्देहे इत्येकम्। तैरसाधारणेऽपरम्। अत्र श्रोत्रव्यादिविषयराज-प्रश्नोत्तरं पुरस्कृत्य सर्व्वजीवसाधारणाकारविश्वमूर्त्ति-विष्णुधारणा प्रथमे। निःसङ्गतां पुरस्कृत्य सर्व्वजीवानामसाधारण-चतुर्भुजत्वादि-विशिष्टाकारं विष्णुधारणाफलपर्य्यन्तं द्वितीये उक्तम् ॥ २ ॥

द्विविधं ध्यानमुपसंहरति। इति तद्द्विविधा प्रोक्तं स्पष्टार्थम् ॥३॥

श्रद्धेति। श्रद्धा द्वेधा। श्रोतृ-वक्तृभेदात्। अत्र सर्व्व-देवेभ्यो हरेरुत्कर्षं पुरस्कृत्य श्रोतृश्रद्धा तृतीये (१)। 'सा चायु-र्हरती'त्यादिना (२) शौनकोक्तेर्गम्यते। राजप्रश्नं पुरस्कृत्य राज-श्रद्धाचतुर्थे (३)। सा च शुकस्य 'नमः परस्मै' (४) इत्यादि-नमस्कारादवगम्यते। वक्तृ-श्रद्धापि श्रवणाङ्गम्। न ह्यश्रद्दधाने वक्तरि श्रोतारस्तत्त्वमधिगच्छन्ति ॥ ४ ॥

विमर्शनमाह। उत्पत्ताविति। विमर्शो द्विधा। उत्पत्त्यु-पत्तिविषयभेदात्। उत्पत्त्युपपत्तौ च पूर्व्वोक्तयोर्देहयोः सम्ब-न्धिन्यौ ॥ ५ ॥

---

(१) भागवत-तृतीयस्कन्धे मैत्रेयविदुरसंवादे।

(२) भागवतम् २।३।१७ श्लोकः।

(३) भागवत-चतुर्थस्कन्धे राजश्रद्धाप्रकाशे।

(४) भागवतम् २।४।१२ २५ श्लोकः।

उत्पत्तिस्त्रिविधाद्यस्य मूर्त्तामूर्त्तिविभेदतः ॥ ६ ॥
उपपत्तिस्त्रिधाक्षेप समाधान-प्रयोजनैः ॥ ७ ॥
त्रयाणां दशभिर्भेदैरित्यध्याया दशक्रमात् ॥ ८ ॥

इति हरिलीलायां वोपदेवकृतौ द्वितीय-
स्कन्धविवरणम् ॥ २ ॥
इति द्वितीयोऽध्यायः ॥

---

उत्पत्तिरिति। तत्रोत्पत्तिस्त्रिविधा। आद्यस्य देहस्य मूर्त्तामूर्त्तविभेदात्। अन्यस्य त्वेकेति। तत्र पञ्चमे साधारणदेहस्योत्पत्तौ विमर्शः। षष्ठे तु तस्यैव मूर्त्तस्यैवामूर्त्तस्योत्पत्तौ। सप्तमे त्ववताराख्यसाधारणस्योत्पत्तौ ॥ ६ ॥

उपपत्तिरिति। उपपत्तिरपि त्रिधा। आक्षेपसमाधान-प्रयोजन(१)भेदात्। तत्राष्टमे देहोपपत्तिं प्रति राज्ञा आक्षेपः। नवमे तु देहोपपत्तिं प्रत्याक्षेपस्य समाधानम्। दशमे तु देहोपपत्तिनिरूपणं प्रयोजनम् ॥ ७ ॥

उपसंहरति। त्रयाणामिति। ध्यान-श्रद्धा(२)विमर्शानाम्। ध्यानस्य श्रद्धायाश्च द्वौ द्वौ भेदौ विमर्शस्य षड़ित्येवं दशभिर्भेदैरित्यध्याया दशक्रमात्। त्रयाणां ध्यानश्रद्धाविमर्शाणां दशाध्यायाः कृता इत्यर्थः ॥ ८ ॥

इति श्रीवोपदेवविरचित-हरिलीलायां मधुसूदन-
सरस्वतीप्रणीतं द्वितीयस्कन्धविवरणम्।
( इति द्वितीयोऽध्यायः ॥ )

---

(१) आक्षेप'—संशयोऽत्र, समाधानं सिद्धान्त'। 'यमुद्दिश्यप्रवर्त्तते तत्प्रयोजनम्'।
(२) श्रद्धा – 'चेतस सम्प्रसाद' 'गुरु-शास्त्र-वाक्येषु विश्वासो' वा। विमर्शो विचार.।

तृतीये तु त्रयस्त्रिंशदध्यायाः सर्गवर्णने ॥ १ ॥

सर्गः कारणसम्भूतिः ॥ २ ॥

भिन्ना सा योगसांख्ययोः ॥ ३ ॥

विदुरायोक्तवान् योगं मैत्रेयो देवहूतये ॥ ४ ॥

कपिलः सांख्यमित्येताविति हासाविवोदितौ ॥ ५ ॥

ऊनविंशतिराद्ये च चतुर्भिर्विदुरागमः ॥ ६ ॥

इति द्वाभ्यामितिकर्त्तव्यमुक्त्वा सम्प्रतिलीलायाः प्रथमभेदं सर्गं वक्तुं तृतीय आरब्ध इत्याह। तृतीय इति। स्पष्टम् ॥ १ ॥

सर्गलक्षणमाह। सर्ग इति। कारणानां जगद्धेतूनां महदादितत्त्वानां सम्भूतिर्जन्म ॥ २ ॥

भिन्नेति। सा कारणसम्भूतिर्योगमार्गेण च भिन्नेत्यर्थः। अथ एवेदमाह। करणद्वयमित्यर्थः ॥ ३ ॥

विदुरायेति। मैत्रेयो विदुराय योगमार्गेण (१) सृष्टिक्रममुक्तवान् ॥ ४ ॥

कपिल इति। कपिलो देवहूतये सांख्यमार्गेण (२)। इति शब्दो हेतौ। एतौ योगेतिहाससांख्येतिहासश्चेति ॥ ५ ॥

तयोरध्यायान् विभजति। ऊनविंशतिरिति एकोनविंशति-

(१) योगमार्गेण—पातञ्जलाद्युक्तयोगप्रक्रियया।

(२) साङ्ख्यदर्शनोक्तप्रणाल्या जन्मनैव सिद्धेन कपिलर्षिणा स्वमात्रे ज्ञानोपदेश कृत। भागवते तृतीयस्कन्धे कपिलगीतायाम।—

"एतन्मे जन्मलोकेऽस्मिन् मुमुक्षूणां दुराशयात्।

प्रसंख्यानाय तत्त्वानां सम्मतायात्मदर्शने ॥

इत्यादि विदुषः कपिलर्षेरुक्तिः।

अष्टभिः सर्गविस्तारः सप्तभिः क्रीड़ताहरेः ॥ ७ ॥
सर्गाधारधरोद्धर्त्तुः ॥ ८ ॥
द्वितीयस्तु चतुर्द्दश ॥ ९ ॥
एकेन तत्र संक्षिप्त-सर्गस्तद्विस्तरोक्तये ॥ १० ॥
चतुर्भिः कपिलोत्पत्तिर्नवभिः कपिलोक्तयः ॥ ११ ॥
बन्धुभिः क्षत्तुरुद्वासः ॥ १२ ॥
तद्गतेः श्रुतिरुद्धवात् ॥ १३ ॥

रध्याया आद्येतिहासे। तत्रैवावान्तरप्रकरणान्याह चतुर्भिरिति ॥ ६ ॥

अष्टभिरिति। क्रीड़तावराहत्वे च ॥ ७ ॥

ननु सर्गे वक्तव्ये किं वराहेण तत्राह। सर्गेति। स हि सर्गस्याधारभूतां धरामुद्धृतवानित्यर्थः। अत उक्तः। आधारस्थिति सव्यपेक्ष चाधेयम् ॥ ८ ॥

द्वितीयेति। द्वितीयः सांख्येतिहासश्चतुर्द्दशाध्यायः ॥ ९ ॥

अत्रावान्तरप्रकरणान्याह। एकेनेति। तस्य संक्षिप्तसर्गस्य ॥ १० ॥

चतुर्भिरिति। उक्तयो निरूपणानि ॥ ११ ॥

प्रकरणार्थमुक्त्वा क्रमात् पादैरध्यायार्थानाह। बन्धुभिरिति। बन्धुभिर्दुर्य्योधनादिभिः। क्षत्तुर्विदुरस्य। उद्वासः पुरान्निर्वासनम्। क्षेमप्रश्नादिकन्तु तत्प्रसङ्गात् ॥ १२ ॥

तदिति। तेषां बन्धूनां हतेर्बधस्य। श्रुतिः श्रवणम् उद्धवात् सकाशात् क्षत्तुरित्येवम्। एतच्च द्वितीये यद्यपि नोपलभ्यते

कृष्णावतारावसितेः ॥ १४ ॥
मैत्रेयास्त्वहितस्य च ॥ १५ ॥
सत्त्वयो विंशतेर्जन्म- ॥ १६ ॥

तथापि "सुयोधनं सानुचरं शयानम्" (१) इत्यन्तं द्वितीयार्थं मत्वा दीर्घदर्शि-आचार्य्येणैवमुक्तम्। एवमन्यत्र। यद्वाऽयं तच्छब्दो यदुवाचिनं बन्धुशब्दं परामृशति। प्रकृतस्य पूर्व्वाध्याये यदु प्रश्नः। तद्वधः श्रुतिश्च। "कृष्णद्युमणिनिम्लोच" (२) इत्यादियदुवधश्रुति-रुद्धवादिति चोत्तरवाक्यद्वयेऽनुवर्णनीयम् ॥ १३ ॥

कृष्णावतारेति। अवसितिरवसानं समाप्तिः। सोऽहन्तद्दर्शना-ह्लादवियोगार्त्तियुत इत्यन्तं तृतीयार्थं ( मत्वा ) अत्रोक्तम् ॥ १४ ॥

मैत्रेयेति। श्रुतिरित्यनुवर्त्तते। तच्चेह तन्त्रेणावर्त्तनीयम्। ततश्च मैत्रेयास्त्व(स्व)हितस्य श्रुतिर्भविष्यतीत्युद्धवाच्छ्रुतिरभूदित्यर्थः। स्वहितं तत्त्वज्ञानम्। सदिति। सता महदादितत्त्वाना (३) या त्रयोविंशतिस्तस्यां जन्मपर्य्यन्तं विदुरं प्रत्युक्तं मैत्रेयेण। तानि च प्रकृतिपुरुषौ हित्वा "मूलप्रकृतिः"(४) इत्यादिश्लोकोक्तानि ॥ १५ ॥

सदिति। परमात्मनो विष्णोर्व्यक्तिः। स्वस्मिन् प्रकटी-करणम् ॥ १६ ॥

---

( १ ) भागवत-तृतीयस्कन्धे १। १। १२ श्लोक।
( २ ) भागवतस्तृतीयस्कन्धे १। २। ७ श्लोक।
( ३ ) "प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैका दशेन्द्रियम्।
भूतानि चेति सामान्यं चतुर्विंशतिरेव ते ॥"
इत्यत्र पुरुषप्रकृती परित्यज्य त्रयोविंशतितत्त्वमिति ज्ञेयम्।
( ४ ) सांख्यकारिका १। ४।

सद्भिर्व्यक्तिः परात्मनः ॥ १७ ॥
सम्यग्बुद्ध्या पुनः प्रश्नः ॥ १८ ॥
स व्यक्तात् पद्मजोद्भवः ॥ १९ ॥
पद्मजेन स्तुतिस्तस्य ॥ २० ॥
सर्गाः कालोक्तये दश ॥ २१ ॥
कालांशाः परमाण्वाद्याः ॥ २२ ॥
ब्रह्म पुत्त्रसमुद्भवः ॥ २३ ॥
आविर्भावो वराहस्य ॥ २४ ॥
गर्भाधानञ्च दैत्ययोः ॥ २५ ॥

सदिति। सद्व्यक्ताद्विष्णोः। पुरुषमात्रात् ब्रह्मणो जन्मपद्मशब्दोक्तिः। "आदौ पद्मं समुद्भूतं ततः पद्मज इत्यपि" विवक्षया ॥१७॥

सम्यगिति। मैत्रेयोक्तं सम्यगवगम्य पुनर्विदुरस्य प्रश्नः ॥ १८ ॥

पद्मजेनेति। सद्व्यक्तस्य सर्गा इति। महदहं-(कार) तन्मात्रेन्द्रियवैकारिकतामसस्थावरतिर्य्यगर्व्वाक्स्रोतो देवभेदाद् दशत्वम् ॥ १९—२० ॥

सर्गा इति। तत्कालनिरूपणाय ॥ २१ ॥

कालेनेति। अंशाः अवयवाः। आदिशब्दात् परं त्रुटिलवादयः परार्द्धान्ताः ॥ २२ ॥

ब्रह्मेति। पुत्त्राः सनकादयः ॥ २३ ॥

आविर्भावेति। स्पष्टम् ॥ २४ ॥

गर्भाधानेति। दैत्यो हिरण्याक्षः हिरण्यकशिपुः। दैत्याधिकारो द्वयोः ॥ २५ ॥

शापो मुनिभ्यो वैकुण्ठे ॥ २६ ॥
विष्णूक्तेभ्यस्त्वनुग्रहः ॥ २७ ॥
हिरण्याक्षस्य सामर्थ्यं वराहेण च सङ्गरः ॥ २८ ॥
बधस्य देवस्तोत्रेषु ॥ २९ ॥
कारणोक्तिः समासतः ॥ ३० ॥
कर्द्दमेन हरेस्तोषो देवहूतेः करग्रहः ॥ ३१ ॥
तयोर्विचित्रसम्भोगस्ताभ्यां कपिलजन्म च ॥ ३२ ॥
लक्षणं भगवद्भक्तेः ॥ ३३ ॥
सच्चतुर्विंशतेस्तथा ॥ ३४ ॥
असत्पुरुषयोश्चैव ॥ ३५ ॥
ज्ञानयोगस्य च क्रमः ॥ ३६ ॥

शाप इति। स्पष्टम् ॥ २६ ॥

विष्णुरिति। मुनिभ्य इत्येवं स्पष्टम् ॥ २७ ॥

हिरण्येति। सङ्गरो युद्धम् ॥ २८ ॥

बधस्येति। स्तोत्रेषु स्तुतिरुत्तराध्यायशेषत्वमत्रोक्तम् ॥ २९ ॥

एवं योगेतिहासार्थमुक्त्वा सांख्येतिहासार्थमाह। कारणेति। कारणं महदादिः। समासः संक्षेपः ॥ ३० ॥

कर्द्दम इति। तच्छब्दाभ्यां कर्द्दमदेवहूती ॥ ३१—३२ ॥

लक्षणमिति। कपिलेन देवहूतीं प्रत्युक्तमिति शेषः ॥ ३३ ॥

सदिति। सत्तत्त्वं तथाशब्दाल्लक्षणम् ॥ ३४ ॥

असदिति। असत् प्रकृतिः। चशब्दाल्लक्षणम् ॥ ३५ ॥

ज्ञानेति। येन क्रमेण ज्ञानयोगाभ्यास इत्यर्थः ॥ ३६ ॥

भक्तियोगस्य कालादेः ॥ ३७ ॥

पापात्तामस्यधोगतिः ॥ ३८ ॥

राजस्यन्तः पुण्यपापात् ॥ ३९ ॥

सात्त्विक्यूर्द्ध्वं स्व पुण्यतः ॥ ४० ॥

धर्म्मेणेति ॥ ४१ ॥

भक्तीति । क्रम इत्येव कालादेरिति भगवद्भक्तिलक्षणम् । भगवद्भक्तिरित्यनेन सहापौनरुक्त्यर्थम् ॥ ३७ ॥

पापादिति । पापात्तामसतीगतिः । सा चाधो नरके ॥३८॥

राजसीति । पुण्यपापाभ्यां राजसी, सा चान्तर्मध्ये । मर्त्त्य-लोके ॥ ३९ ॥

सात्त्विकीति । केवलपुण्यात् सात्त्विकी (१) । सा चोर्द्ध्वं स्वर्गे (२) ॥ ४० ॥

तदुक्तं सांख्ये "धर्म्मेण गमनमूर्द्ध्वं (३) गमनमधस्ताद् भवत्य-धर्म्मेण" (४) । "ऊर्द्ध्वं सत्त्वविशालस्तमो विशालश्च मूलतः सर्गः । मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्य्यन्तः" (५) इति ॥ ४१ ॥

---

(१) भागवतम् ३ । २९ । १०-१२ श्लोकः ।

(२) "धर्म्मेण गमनमूर्द्ध्वम्"—ऊर्द्ध्वं स्वर्गादावित्यर्थः । "ऊर्द्ध्वं सत्त्वविशाला" सांख्यसूत्रम् ३ । ४८ ।

"मध्ये रजोविशाला" । "तमो विशाला मूलतः" सांख्यसूत्रम् ३ । ४९—५० ।

(३) "ऊर्द्ध्वं सात्त्विकधर्म्मेण" इत्यधिकः पाठोऽत्रानुमीयते मूले ।

(४) "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः" वैशेषिकदर्शनम् १ । २ सूत्रम् । सांख्यकारिका　　　. । धर्म्मेणाभ्युदयनिःश्रेयसप्रदेन यागादिना वा, ऊर्द्ध्वं स्वर्लोकादिषु गमनं भवति । अधर्म्मेणाधस्तात् नरकादिषु लोकानां गतिरित्यर्थः ।

(५) सांख्यकारिका........... ।

देवहूतिवदात्माप्तिः ॥ ४२ ॥

अध्यायार्था इमेऽङ्घ्रिभिः ॥ ४३ ॥

इति हरिलीलायां वोपदेवकृतौ तृतीय-
स्कन्धविवरणम् ॥ ३ ॥
( समाप्तस्तृतीयोऽध्यायः ॥ )

देवेति। अस्य द्विविधस्यापि सर्गस्य सम्यज्ज्ञानादात्मप्राप्तिः। देवहूतिवदन्येषामपि स्यादित्यर्थः ॥ ४२ ॥

अध्यायेति। स्पष्टमस्यार्थः ॥ ४३ ॥

इति वोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वतीप्रणीतं
तृतीयस्कन्धविवरणम् ॥ ३ ॥ १० ॥

---

ऊनत्रिंशद्भिरध्याये विसर्गस्तूर्य्य ईरितः ॥ १ ॥
विसर्गः कार्य्यसम्भूतिः ॥ २ ॥
कार्य्यं बुध्वा चतुर्व्विधम् ॥ ३ ॥
स्त्रीबाल-प्रौढ़वृद्धत्वैश्चतुः प्रकरणीकृतेति ॥ ४ ॥

ऊनत्रिंशदिति। एवं सर्गमुक्त्वा तद्भेदो विसर्ग उच्यते चतुर्थे इत्याह, ऊनेति ॥ १ ॥

तल्लक्षणमाह। विसर्ग इति। सर्ग एव विविध-कार्य्यरूपो विसर्ग इत्यर्थः ॥ २ ॥

कार्य्यमिति। प्रकरणान्याह। ननु सत्स्वपि पर(ं) सहस्रेषु कार्य्येषु किमिदं चतुर्व्विधमिति ? यदि तावल्लिङ्गमुपलक्षणकं तदा सर्व्वकार्य्यप्राप्तिः स्यात्, लिङ्गस्य सर्व्ववस्तुनिष्ठत्वात्। यदाह भर्त्तृहरिः “आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः। मूर्त्तामूर्त्ते-(ि)षु सर्व्वासु लिङ्गत्वेनानुदर्शिता” (१) इति। किञ्च वयोविशेषानुत्सृज्य पुंस्त्वमात्रं वाच्यं स्यात्। क्लीवग्रहणञ्च कर्त्तव्यम्। लिङ्गानाञ्च त्रित्वादिष्टं चातुर्व्विध्यं न सिध्येत्। तेन न लिङ्गमुपलक्षणम्। नापि वयः। स्त्रीग्रहणस्यानर्थक्यप्रसङ्गात्। घटादिष्वव्याप्तेश्च। वयो हि कालकृता शरीरावस्था। पौगण्डे चाव्याप्तिः। चतुष्ट्वहानिस्तूत्तैव। तस्मान्नवयः। नाप्युभयम्, उक्तसर्व्वदोषानुसङ्गात्। लिङ्गवयसोः प्रत्येकं त्रैविध्येन कार्य्यस्य षड्विधत्वप्रसङ्गाच्च। तदेतदत्यन्तं सन्दिग्धमाचार्य्याणां कार्य्यं बुद्ध्वा चतुर्व्विधमिति चेन्न। इहोच्चावचे कार्य्ये सत्यपि पुरुषार्थो-

(१) भर्त्तृहरिप्रणीतवाक्यपदीये।

रक्तस्य स्त्री तयोः साम्ये क्लीवः शुक्रार्त्तयोः पुनः ॥५॥

पयोगिनश्चतुर्विधस्यैवोपादानात्। तत्र मनुष्याधिकार शास्त्रमिति (१) मनुष्या एवोपात्ताः। तत्रापि नाग्निहोत्रादिवज्ञ्त्रो नियतलिङ्गवयस्क एवाधिकारी (२)। किन्तु सर्व्वोऽप्यधिक्रियत इति वक्तुमृषिणा स्त्रीबालप्रौढ़वृद्धा दर्शिताः। षड़स्य तु भक्त्यधिकारित्वे शुक्रशोणितसाम्यरूपत्वेन स्त्रीपुंसयोरन्तर्भाव इति मत्वा न पृथग्ग्रहणम्। तथाच शारीरे "अतएव हि शुक्रस्य बाहुल्याज्जायते पुमान्" ॥ ३—४ ॥

रक्तस्येति। "रक्तस्य स्त्रीतयोः साम्ये क्लीवः शुक्रार्त्तयोः पुनः" (३)। अतएव महाभाष्ये "प्रसवो लिङ्गमित्युक्तं संस्थानं सहतिरपचयः। प्रसवः प्रसूतिरुपचय इत्यर्थः। पुंग्रहणन्तु बालप्रौढ़िवृद्धैरित्यत्र सवयस्कानां पुंसामेवोपादानं कृतम्। अन्यथा स्त्री न पृथग्ब्रुयात्। पोगण्डन्तु प्रौढ़ेऽन्तर्भूतमिति न पृथगुपात्तम्। तदुक्तम् "गर्भस्थः सदृशो ज्ञेय अष्टमाद्वत्सराच्छिशुः। बालस्त्वाषोड़शाद्वर्षात् पोगण्डश्चेति शस्यते ॥" (४) इति। तस्मात् सुष्ठूक्तं कार्य्यं बुध्वा चतुर्विधमिति। तदेतद्बुध्वेत्येतस्य गर्भं द्रष्टव्यम्। उक्तं चातुर्विध्यं ग्रन्थेन स्पष्टयति ॥ ५—६ ॥

---

(१) वेदान्तदर्शन—तद्भाष्यम् १। ३। २५ सूत्रम।

(२) 'वसन्ते ब्राह्मणोऽग्निमादधीत' इत्यादि। 'कृष्णकेशोऽग्निमादधीत' इति च।

(३) सुश्रुतशारीरस्थाने, चरकसंहितायाञ्च (शारीरस्थान) २। ११ श्लोकः। एवमेव गर्भोपनिषदि।

(४) वैद्यके, ज्योतिषे भागवत-दशमस्कन्ध द्वादशाध्यायस्य श्रीधर्य्याञ्च।

सती ध्रुवपृथुप्राचीनेतिहासैस्तदुक्तये ॥ ६ ॥

सप्तभिश्च चतुर्भिश्च दशभिश्चाष्टभिस्तथा ॥ ७ ॥

मनुकन्यान्वयः सत्यै ॥ ८ ॥

द्वेषस्तत् पति-तातयोः ॥ ९ ॥

पत्यानिषेधनं सत्याः ॥ १० ॥

देहत्यागः पितुर्मखे ॥ ११ ॥

गणैर्दक्षाध्वर-ध्वंसः ॥ १२ ॥

सतीति। सती स्त्री ध्रुवो बालः पृथुः प्रौढ़ः प्राचीनबर्हि-र्वृद्धः। भीमादिवदुत्तरपदलोपः (१)। सत्यादीनामितिहासैस्तस्य चतुर्विधस्य कार्य्यस्योक्तये चतुःप्रकरणीकृतेत्यर्थः ॥ ६ ॥

अस्याध्यायान् विभजते। सप्तभिरिति। एवमन्यत् क्रमात् पादैरध्यायार्थानाह ॥ ७ ॥

मनुरिति। सत्यै सती प्रसङ्गार्थम् ॥ ८ ॥

द्वेष इति। तस्याः सत्याः पतिश्च तातश्च पतितातौ तयोः। रुद्रदक्षयोरित्यर्थः ॥ ९ ॥

पत्येति। दक्षगृहं मागा इति ॥ १० ॥

देहेति। सत्या इत्येव ॥ ११ ॥

गणैरिति। गणाः प्रमथाः ॥ १२ ॥

---

(१) यथा "भीमसेन" इत्यत्र समासे गौणसेनपदस्य लोपः। तथाऽत्र सती पदात् स्त्रीत्यस्य, ध्रुवपदाद् बाल इत्यस्य, पृथुपदात् प्रौढ इत्यस्य, प्राचीन-पदात् बर्हि इत्यस्य च लोपो यात।

ब्रह्मणा रुद्रसान्त्वनम् ॥ १३ ॥
विष्णुना यज्ञसंसिद्धिः ॥ १४ ॥
ध्रुवेणाराधनं हरेः ॥ १५ ॥
कामलाभो ध्रुवस्यास्मात् ॥ १६ ॥
यक्षान्ताद्वारणं मनोः ॥ १७ ॥
विष्णुध्रुवपदावाप्तिः ॥ १८ ॥
पृथवे वेण सम्भवः ॥ १९ ॥
वेणवाह्वोः पृथूत्पत्तिः ॥ २० ॥
सूताद्यैस्तवनं पृथोः ॥ २१ ॥

ब्रह्मणेति। सान्त्वनं क्रोधहरणम् ॥ १३ ॥

विष्णुनेति। समाप्तिः अर्थाद् दक्षस्य। स्त्रियमुक्त्वा बालमाह ॥ १४ ॥

ध्रुवेणेति। स्पष्टम् ॥ १५ ॥

कामेति। कामलाभ इष्टप्राप्तिः। अस्माद्धरेः ॥ १६ ॥

यक्षेति। अन्तो नाशः मनुः स्वायम्भुवः। कर्त्तरि षष्ठी। मनुकर्त्तृकं वारणमित्यर्थः। ध्रुवस्यैव ॥ १७ ॥

विष्णुध्रुवेति। विष्णुदत्तं यद् ध्रुवमचलं पदं तत्प्राप्तिः ध्रुवस्येत्यर्थः। पौगण्डमाह ॥ १८ ॥

पृथव इति। पृथोः प्रसङ्गार्थम् ॥ १९ ॥

वेणेति। स्पष्टम्। २० ॥

सूतेति। आदिशब्दान्मागधवन्दिनौ ॥ २१ ॥

पृथुना निग्रहो भूमेः ॥ २२ ॥
तत्र दुग्धस्य दोहनम् ॥ २३ ॥
जयोऽश्वमेधः शक्रस्य ॥ २४ ॥
साक्षात्कारो मधुद्विषः ॥ २५ ॥
सभामध्ये स्वधर्म्मोक्तिः ॥ २६ ॥
कुमारेभ्यः परात्मधीः ॥ २७ ॥
तयावनं स्वधर्म्मोक्तिः ॥ २८ ॥
तपः पित्रे प्रचेतसाम् ॥ २९ ॥
ध्यात्मोक्तिर्नारदेनास्मै ॥ ३० ॥

पृथुनेति । दुग्धस्यौषधिशब्दो बलरूपस्य ॥ २२—२३ ॥

जयेति । जयपृथुनेत्येव । स्पष्टम् ॥ २४ ॥

साक्षादिति ॥ २५—२६ ॥

कुमाराः स्पष्टम् । कुमारेभ्य इति । सनकाद्याः(१) । परात्मधीस्तत्त्वज्ञानम् ॥ २७ ॥

तयेति । तया परमात्मधिया । पृथोरिति मण्डूकप्लुत्या चतुर्थ्वपि वर्त्तते । पुत्रकार्य्यमाह ॥ २८ ॥

पुत्रेति । तप इति । पित्रे प्राचीनबर्हिषे तत्प्रसङ्गार्थमित्यर्थः । रुद्रगीतमित्यन्तोऽध्यायार्थः ॥ २९ ॥

धीरिति । धीश्च आत्मा च ध्यात्मा तौ तयोरुक्तिः । वृद्धात्मनो

---

(१) सनक-सनन्द-सनातन सनत्कुमाराश्चत्वारः । नत्वन्यत्लोक्ता ब्रह्मणो-मानसतनयाः पञ्चर्षिकान्ता सप्त । भागवतम् ।३।१२।४-

पापर्द्धिस्तां विनात्मनः ॥ ३१ ॥
कालाभिभूतिस्तद्युक्तेः ॥ ३२ ॥
मुक्तिर्द्वन्द्वविपर्य्यये ॥ ३३ ॥
पुरञ्जनादिव्याख्यानं तपःसिद्धिप्रचेतसाम् ॥ ३४ ॥
दक्षमुत्पाद्य निर्व्वाणम् ॥ ३५ ॥
अध्यायार्थः स्पृशोऽङ्घ्रयः ॥ ३६ ॥

निरूपणमित्यर्थः। धियः पुरञ्जनीरूपायाः। आत्मनश्च पुरञ्जनरूपस्य अस्मै प्राचीनबर्हिषे ॥ ३० ॥

पापेति। तां धियं पुरञ्जनीरूपां विना तद्रहितस्यात्मनः पुरञ्जनरूपस्य। पापर्द्धिं मृगया। समासगतमपि तामिति धीशब्दं विच्छिद्य तच्छब्देन परामृशति। "अथशब्दानुशासनम्" (१)। केषां शब्दानामितिवत्। पुरञ्जन्यनुनयस्तत्प्रसङ्गात् ॥ ३१ ॥

कालेति। तस्य स्त्रीसङ्गिनः पुरञ्जनस्य शक्तेः। कालेन तिरस्कारः। एवं क्रमणयावध्यात् तदन्तमध्यायार्थं मत्वोक्तम्। द्वन्द्वानि शीतोष्णादीनि। तेषां विपर्य्ययेऽस्वीकारे सति यद्वा जन्मान्तरेऽन्यथाभावे सति मुक्तिः। आत्मन इत्येव ॥ ३२ ॥

मुक्तीति। स्पष्टम्। प्रचेतसामित्यर्थः ॥ ३३—३४ ॥

दक्षेति। दक्षोत्पत्तिस्तु पूर्व्वाध्याये इति शेषः। अतएवोत्पाद्येति ल्यबन्तस्योपसर्ज्जननिर्द्देशः ॥ ३५ ॥

अध्यायेति। न लिङ्ग प्रकरणे प्राचीनवर्हिर्नायक इत्युक्तम्।

(१) महाभाष्यम् ॥१॥१।

उपक्रमोपसंहारौ प्रचेतोभिस्तदात्मजैः ॥ ३७ ॥
तथाध्यात्मपरोक्षाच्च श्रैष्ठ्यं प्राचीनबर्हिषः ॥ ३८ ॥
पुण्यं पुत्रस्य पितुरप्यन्तःकरणशुद्धये ॥ ३९ ॥
भवेदिति द्योतयितुं प्रचेतो वृत्तवर्णनम् ॥ ४० ॥
( पुत्रेण वसुतामेति पौत्रादुद्रत्वमाप्नुयात् )॥ ४१ ॥

इति श्रीहरिलीलायां वोपदेवकृतौ चतुर्थ-
स्कन्धविवरणम्।

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

तत्त्वायुक्तम्। उपक्रमोपसंहारयोः प्रचेतसामेव प्रतीतिः। अतः सन्दंशन्यायेन तेषामेव प्रकरणार्थत्वमस्तु न प्राचीनबर्हिष इति-वत्तत्राह ॥ ३६ ॥

उपक्रमेति। यद्यपि प्राचीनबर्हिष पुत्रैः प्रचेतोभिः, प्रकरणस्योपक्रमोपसंहाराविह दृश्यते। तथापि प्राचीनबर्हिष एव श्रैष्ठ्यम्। कुतः अध्यात्मपरोक्षात्। अध्यात्मस्य तदधि· कारिणैव परोक्षतयैवोपदेशात्। "बर्हिषन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शित"मित्युक्तम् (१)। नन्वेवञ्चेत् किं प्रचेतसां वृत्तवर्णनेन तत्राह ॥ ३७—३८ ॥

पुण्यमिति। पुत्रस्य पुण्यं तस्यैवान्तःकरणशुद्धये स्यादिति सिद्धमेव। किन्तु तत्पितुरन्तःकरणशुद्धये भवेदिति द्योतयितुम् प्रचेतसां वृत्तकथनमित्यर्थः। तथाच कात्यायनः ॥ ३९—४० ॥

पुत्रेणेति। "पुत्रेण वसुतामेति पौत्रादुद्रत्वमाप्नुयात्।

---

(१) भागवतम् ४।२८।६५ श्लोः।

आदित्यत्वं प्रपौत्रेण तस्मादेवमुपास्यताम् ॥" इति (१)। विवृत-श्चेदमाचार्य्यैः सूर्य्यस्तुतौ "मर्त्त्यः प्रेत्यद्युषु प्राग्वसति वसुवपुः पुत्रपुण्येन रुद्रो धर्म्मिष्ठः। पौत्रपुण्यैरित्यादि। तस्मात्तत्पुण्यैः स्वपुण्येन च शुद्धात्मनो राज्ञो ज्ञानदीधितिर्जातेति तस्यैव प्राधान्यं सिद्धम् ॥ ४० ॥

इति श्रीवोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वती-
प्रणीतं चतुर्थस्कन्धविवरणम् ॥ ४ ॥
( इति चतुर्थोऽध्यायः ) ॥

---

(१) कात्यायन गृह्य सूत्रम्।

*

पञ्चमे स्थानमध्याय षड्विंशत्या निरूपितम् ॥ १ ॥

मर्य्यादापालनं स्थानम् ॥ २ ॥

तास्तिस्रो लोकभेदतः ॥ ३ ॥

लोकाः क्षिति द्यौः पातालम् ॥ ४ ॥

प्रियव्रत तदुद्भवै.—

क्षितेर्द्वीपादिमर्य्यादाः कृताः प्राक्(कृत)तत्तदन्वयैः ॥५॥

एवञ्च पञ्चदशभिः पञ्चभिश्च त्रिभिस्त्रिभिः

चतुः प्रकरणी प्रोक्ता ॥ ६ ॥

अथाध्यायार्थान् क्रमाच्छृणु ॥ ७ ॥

एवं विसर्गमुक्त्वा क्रमप्राप्तं स्थानं पञ्चमेऽभिहितमित्याह । पञ्चम इति । स्थानं लक्षयति ॥ १ ॥

मर्य्यादेति । स्थानं मर्य्यादाना स्वधर्म्मार्ज्जितभूमिका सीमाना पालनमनुल्लङ्घनम् ॥ २ ॥

ता इति । तामर्य्यादाः ॥ ३ ॥

प्रकरणानि वक्तुं लोकानाह । लोका इति । स्पष्टम् ॥ ४ ॥

ननु स्थानेऽभिधेये किं प्रियव्रतवंशेन तत्राह । प्रिय इति । प्रियव्रतेन तत्पुत्र-पौत्रैश्च भूमेर्द्वीपवर्षादिव्यवस्थाः कृताः । तस्मात् तेषां पूर्व्ववंशः कथ्यत इत्यर्थः ॥ ५ ॥

ततश्चत्वारि प्रकरणानीत्याह । एवमिति । वंशस्य प्रकरण-मेकम् । लोकत्रयमर्य्यादानां त्रीणि । इत्थं चत्वारि । तानि च—क्रमात् पञ्चदशभिरध्यायैरित्यर्थः ॥ ६ ॥

अध्यायार्थान् वक्तुमाह । अथेति । शृण्विति शिष्यं प्रत्युक्तम् ॥७॥

प्रियव्रताग्नीध्रनाभिष्वेकैकम् ॥ ८ ॥

ऋषभे त्रयम् ॥ ९ ॥

राजोपदेष्टृमुक्तत्वैः ॥ १० ॥

भरतेष्टौ प्रपौत्रजे ॥ ११ ॥

पुण्येन सङ्गजड़ता शिविकोढ़िप्रकाशनैः ॥ १२ ॥

तत्त्वाख्यानभवारण्य तद्व्याख्यानैः परोऽन्वये ॥१३॥

मेर्विलावृत षट्कं द्वि द्वि वर्षं द्वीपैश्च पञ्चकौ॥ १४ ॥

प्रियेति। प्रियव्रतादिषु। त्रिष्वेकैकोऽध्यायः ॥ ८ ॥

ऋषभ इति। तुशब्दः प्रत्येकम्। ऋषभस्य राजत्वमुपदेष्टृत्वं मुक्तत्वञ्चेति क्रमात्त्रिषु। मुक्तत्वे तु एवमनुशास्येत्यध्यायार्थोऽभिमतः ॥ ९—१० ॥

भरत इति। प्रपौत्रजे प्रियव्रतस्य। क्रमादष्टानामर्थमाह। पुण्यक्रमेण सङ्गमः ॥ ११ ॥

जड़त्वं शिविकाया उढ़िर्वहनम्। प्रकाशनं स्वस्य प्रकटीकरणं तत्त्वनिरूपणं भवाटवी तस्याव्याख्यानञ्चेत्यष्टानामर्थाः ॥ १२ ॥

परः पञ्चदशः अन्वये भरतवंशविषये (१) ॥ १३ ॥

अथ भूप्रकरणमाह। मेर्व्विति। मेरुश्चेलावृतञ्च षट्कञ्चार्था-

(१) "नाभेः पुत्त्रस्तु ऋषभादृभरतो ह्यभवत्ततः
तस्यनाम्ना त्विदं वर्षं भारतञ्चेति कोर्त्त्यते ॥"
"भरणाच्च प्रजाना वै मनुर्भरत उच्यते"।
स्कान्दे कुमारिका खण्डे ३९ अ।
नृसिंहपुराणं ३० अ। ब्रह्माण्डपुराणे पूर्व्वभागः ४८।१।

दिविक्रमात्त्रयः सूर्य्य ध्रुव सूर्य्यान्तर ध्रुवैः ॥ १५ ॥
पातालशेषनरकैस्त्रयोऽधो भुवने मताः ॥ १६ ॥

इति श्रीहरिलीलायां वोपदेवकृतौ पञ्चम-
स्कन्धविवरणम् ॥ ५ ॥
( समाप्तः पञ्चमोऽध्यायः )

---

द्वर्षाणाम् । द्विवर्षञ्च द्वयोर्वर्षयोः समाहारः द्विवर्षम् । पात्रादेराकृतिगणत्वान्नङीप् (१) । द्वीपानि च तैः तत्र षोड़शे मेरुः कथ्य(न्त)ते । सप्तदशे इलावृतम् । गङ्गावतारादि तु पूर्व्वविशेषः । अष्टादशे भद्राश्वहरिवर्षकेतुमाल( )रम्यकहिरण्मयोत्तरकुरव इति षड्वर्षाणि । एकोनविंशे किं पुरुषभारतमेतं च इति द्वे वर्षे । विंशति(तं) सर्व्वद्वीपानीति । कौ भूविषये पञ्चाध्याया इत्यर्थः ॥ १४ ॥

स्वर्गप्रकरणमाह । दिवीति । सूर्य्यस्य ध्रुवसूर्य्ययोरन्तरस्य ध्रुवस्य तैः क्रमात्त्रयोऽध्यायाः इत्यर्थः ॥ १५ ॥

पातालप्रकरणमाह । पातालेति । पातालस्य शेषस्य नरकस्य तैरधोभुवने क्रमात्त्रय इत्यर्थः ॥ १६ ॥

इति श्रीवोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वती
प्रणीतं पञ्चमस्कन्धविवरणम् ।
( इति पञ्चमोऽध्यायः ॥ )

---

( १ ) पाणिनिः ४।१।२९ सूः ।

षष्ठ एकोनविंशत्या पुष्टिः ॥ १ ॥

सानुग्रहो हरेः ॥ २ ॥

कर्म्मणा येन यैर्यत्र स्थातव्यं तेन तत्र वै ॥ ३ ॥

तिष्ठन्तीह मर्य्यादापालनं स्थानमीरितम् ॥ ४ ॥

कृतेऽपि पातके यत्र न पातः प्रत्युतोन्नतिः ॥ ५ ॥

सोऽनुग्रहः। अजामिलस्य भुवीन्द्रस्य यथा दिवि ॥६॥

षोड़शभिश्च ॥ ७ ॥

एवं पञ्चमार्थमुक्त्वा षष्ठे पोषणं निरूपयिष्यन्नाह। पुष्टिरिति। पुष्टिः पोषणं तत् किमन्नादिदानेनेत्याह ॥ १ ॥

सा पुष्टिर्हरेर्दुराचारेष्वपि भक्तेष्वनुग्रहः ॥ २ ॥

ननु स्थानान्तरमेव पोषणनिरूपणमेकः प्रसङ्गः। विपर्य्यय एव कस्मान्न स्यादिति। एतदेव परिहर्त्तुं कृतमपि स्थानलक्षणं स्फुटयति। कर्म्मेति। अयमर्थः—येन विहितेन कर्म्मणाकर्त्तव्येन यैरधिकारिभिर्यत्र स्थाने स्थेयं तेनैव तत्र तिष्ठन्तीति हि मर्य्यादापालनं स्थानं तच्चरितं पञ्चमे (१) भूसंस्थानादिकथनेन यत् पुनर्विहितातिक्रमेणान्यथाकरणं तत्र कृतेऽपि भगवद्भक्तियोगान्न पातः। किन्तु भक्तिरेवेति मर्य्यादाभङ्गव्यपेक्षत्वादनुग्रहस्य तदानन्तर्य्ययुक्तमेवेत्याह ॥ ४—५ ॥

स इति। स्पष्टम् ॥ ६ ॥

अत्रैव ग्रन्थस्य निदर्शनमाह। यथा निषिद्धाचरणेऽप्यनुग्रहो-

---

(१) भागवतीय पञ्चमस्कन्धो द्रष्टव्यः।

ऐन्द्रं पापं षट्काष्टकद्विके ॥ ८ ॥

विश्वरूपस्य वृत्रस्य मरुताञ्च बधात्त्रिधा ॥ ९ ॥

दक्षान्वयस्तदुत्पत्त्यै विश्वरूपे त्रिकेऽग्रिमे ॥ १० ॥

वृत्राष्टके चतुष्केऽन्ने (चित्रकेतुत्वकीर्त्तनम्) ॥ ११ ॥

वृत्र प्राक् चित्रकेतुता ॥ १२ ॥

अजामिलाघ-नाशोक्तिः ॥ १३ ॥

ऽजामिलस्य। एतच्च भुवि भूपातकिनामन्येषामप्युपलक्षणम्। इन्द्रस्येति स्वर्ग्याणां पातालन्तु स्वर्गाविशिष्टमिति पृथक् नोक्तम्। अतश्चेदं महाप्रकरणाद्वयमित्याह। त्रिभिः त्रिभिरिति। अध्यायैः क्रमादिति शेषः ॥ ७ ॥

द्वितीये चावान्तरप्रकरणान्याह। इन्द्रमिति। इन्द्रस्य पापं विश्वरूपवृत्रमरुतां बधात्त्रिधा। तच्चाध्यायानां षट्के अष्टके द्विके च क्रमादुक्तम्। यथा षट्के विश्वरूपबधात्। अष्टके वृत्रबधात्। द्विके मरुद्बधात्। समूहे कण्प्रत्ययः (१) ॥ ८ ॥

ननु विश्वरूपविषये षट्क इत्युक्तं तत्कथम् आद्येऽध्याये दक्षवंशोपलम्भादत आह। दक्षेति ॥ ९ ॥

विश्वरूप सम्बन्धिनि षट्के अग्रिमे आद्ये त्रिके दक्षान्वयः कथ्यते। किमर्थन्तस्य विश्वरूपस्योत्पत्तौ तत् प्रसङ्गार्थमित्यर्थः ॥१०॥

वृत्रेति। वृत्रस्य प्राक्चित्रकेतुत्वमासीदिति तदपि वृत्रप्रसङ्गादुक्तमित्यर्थः ॥ ११ ॥

अथ क्रमात् पादैरध्यायार्थानाह। अजेति। अघं पापम्। विष्णुपार्श्वदैर्यमदूतानां निरुत्तरीकरणम् ॥ १२ ॥

---

(१) पाणिनिः ५।२।५१ सू॰।

वैष्णवैर्यास्य निग्रहः ॥ १४ ॥
यमेन सान्त्वनं तेषां दक्षेणाराधनं हरेः ॥ १५ ॥
नारदात् पुत्त्रनाशोऽस्य दौहित्राद्विश्वरूपभूः ॥ १६ ॥
तस्य देव पुरोधस्त्वम् ॥ १७ ॥
गुरुत्वं विष्णु कर्म्मणि ॥ १८ ॥
तद्वधाघाद्वृत्रभयम् ॥ १९ ॥
वृत्र वासवसङ्गरः ॥ २० ॥
वृत्रभक्तिज्ञानं शौर्य्यं वृत्रस्य मरणं रणे ॥ २१ ॥
वृत्रहत्या प्रतीकारः ॥ २२ ॥
चित्रकेतोः सुताच्छुचः ॥ २३ ॥
बोधोऽङ्गिरो नारदाभ्यां विद्यालाभश्च नारदात् ॥२४॥

यमेनेति। स्पष्टम् ॥ १३—१५ ॥

नारदेति। दौहित्राद्दक्षस्य भूरुत्पत्तिः। सम्पदादित्वात् क्विप् ॥ १६ ॥

तस्येति। तस्य विश्वरूपस्य देवपुरोधस्त्व देवपौरोहित्यम् ॥१७

गुरुत्वेति। नारायणकवचे गुरुत्वं इन्द्रं प्रतीति शेषः ॥ १८ ॥

तदिति। तस्य विश्वरूपस्य वधाद् यदघं तस्माद्वृत्रभयमिन्द्रस्य ॥ १९ ॥

वृत्रेति। वासव इन्द्रः। वृत्रभक्तीति। स्पष्टानि ॥ २०—२२ ॥

चित्र इति। शुचः विविधाः शोकाः चित्रकेतोरिति त्रिषु ॥ २३ ॥

बोध इति। चकाराज्जीवोक्तिसङ्कर्षणदर्शने ॥ २४ ॥

गौरीशापाच्च वृत्रत्वम् ॥ २५ ॥

गर्भे शक्रमरुद्भिधा ॥ २६ ॥

व्रतं दितिकृतं पुत्त्राम् ॥ २७ ॥

प्रत्यध्यायमिमेऽङ्घ्रयः ॥ २८ ॥

इति हरिलीलायां वोपदेवकृतौ षष्ठ-

स्कन्धविवरणम् ॥ ६ ॥

( समाप्तः षष्ठोऽध्यायः। )



---

गौरीति। स्पष्टम् ॥ २५ ॥

गर्भ इति। शक्रेण मरुतां भिदा भेदः (१)। सा च गर्भे गर्भस्थितानामित्यर्थः ॥ २६ ॥

व्रतमिति। पुत्त्रं पुत्त्रहितम् ॥ २७ ॥

प्रतीति। अध्यामध्यायम्प्रतीत्यर्थः ॥ २८ ॥

इति वोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वती-

प्रणीतं षष्ठस्कन्धविवरणम् ॥ ६ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

(१) 'शक्रोऽदितेश्छलेन गर्भं व्रतनियमलङ्घनेन च प्रविश्य तं गर्भं स्वीयास्त्रेणोनपञ्चाशद्भागेन खण्डीकृतवांस्तेनोनपञ्चाशद्वायवो जाता' इति पौराणिकी-वार्त्ता।

**सप्तमे पञ्चदशभिरध्यायैरूतिवर्णनम् ॥ १ ॥**
**ऊतिः प्राग् जन्मजा कर्त्ता भोक्तास्मीत्यादिवासना ॥२॥**
**सा प्रह्लादेतिहासेन दशाध्यायेन दर्शिता ॥ ३ ॥**
**स्वरूपतः कारणतः पञ्चाध्यायेन कर्म्मणा ॥ ४ ॥**
**प्रह्लादस्य परो रागो द्वेषः पितृ-पितृव्ययोः ॥ ५ ॥**
**विष्णौ तयोरविषये ॥ ६ ॥**

एवं षष्ठे पुष्टिमुक्त्वा सप्तमे ऊतिरुच्यत इत्याह। सप्तम इति। ननु किमवनमूतिशब्दार्थौ नेत्याह। 'ऊतयः कर्म्मवासना' (१) इत्युक्तत्वात्। रूढ़ोऽयमत्रेत्यर्थः ॥ १—२ ॥

नन्वस्याः किं स्वरूपं किं कारणमिति तत्राह। सेति। सा वासना। दशाध्याया यस्मिन्नितिहासे स तथा। प्रह्लादेतिहासेन तस्याः स्वरूपमुक्तम्। कारणन्तु कर्म्मणेत्यध्यायपञ्चकेन कर्म्मनिरूपणेनोक्तम्। अतोऽत्र प्रकरणद्वयम्। उक्तमेव विवृणोति ॥ ३—४ ॥

प्रह्लादेति। प्रह्लादस्य विष्णौ परोऽनुरागः। पितृ-पितृव्ययोश्च तस्य प्रह्लादस्य यो पितृ-पितृव्यौ हिरण्यकशिपुर्हिरण्याक्षश्च तयोस्तस्मिन्नेव परोद्वेषः। इत्येव रूपावासना इत्यर्थः। तयोः पितृ-पितृव्ययोः रागद्वेषयोर्वोभयत्र हेतुरसुरत्वप्रापकं कर्म्म च इत्याह ॥ ५—६ ॥

---

(१) भागवतम् २।१०।४ श्लो। "ऊयन्ते कर्म्मभिस्तन्यन्ते इत्यूतयः। यद्वा इत्यर्थात् संश्लेषार्थाद्वाऽवतेर्धातोरिदं रूपम्। ऊयन्ते कर्म्मभिर्वध्यन्ते संश्लिष्यन्त इति वा ऊतय इत्यर्थः। इति तत्र श्रीधरी।

कर्म्मणोऽसुरभावदात् ॥ ७ ॥
द्रष्टुमीशं विहन्तुं तद्वैकुण्ठे कलहान्मिथः ॥ ८ ॥
चतुःसनो हि प्रह्लाद इतरौ विजयजयः ॥ ९ ॥

धर्म्म इति । ननु तत्कर्म्मैव कुतो जातं तत्राह ॥ ७ ॥

द्रष्टुमिति । कलहस्य एको द्रष्टुं प्रवृत्त्या अपरौ तु तद्दर्शनं विहन्तुं प्रवृत्तौ इत्यतो हेतोः ॥ ८ ॥

ननु वैकुण्ठे प्रह्लादस्य दैत्ययोश्चाभावात् कथं कलहप्रसङ्गः तत्राह । चतुरिति । यः प्रह्लादः स प्राक् चतुःसन आसीत् । चतुर्णामपि एकत्वविवक्षया चतुःसन इत्युक्तम् (१) । एकमेव ब्रह्म तपश्चतुर्धावतीर्णम् । यावितरौ दैत्यौ तौ जयविजयावास्ता-मिति कलहप्रसङ्गः । न च प्रह्लादस्य चतुःसनत्वमलक्षितमूल-मिति शङ्क्यम् । जयविजयनिदर्शनेन तस्याऽप्यनुमातुं शक्यत्वात् । यथा च चतुःसनेन तौ स्वस्थानात् प्रच्यावितावेवं स्वयमपि तेनैव कर्म्मणा च्युतः । कः खलु इह स्वकृतस्य कर्म्मणः फलं न भुञ्जीत । कः पुनरिह स्वहृदयो वासनानिरूपणमिदं पर्य्यालोच्य इदमपङ्गुवीत । एतदेवाचार्य्यैर्विवृतम् । पुरुषोत्तमस्तु तौ । "जयस्य विजयस्य च च्युतिरकुण्ठवैकुण्ठतश्चतुःसनरुषेति यत्तदुचितं न दौवारिके मुनौ च पुरुषोत्तमे त्वयि च शुद्धसत्त्वात्मके जय 'इत्यु-दरमन्तरं कुरुत' (२) आदिराज्ञानुर्त" इति । अतोऽनुचितस्या-स्तरस्य करणात्तैः स्वस्थानच्युतिलक्षणं भयमनुभूतमित्यर्थः ॥ ९ ॥

---

(१) सनक-सनन्द-सनातन-सनात्कुमाराः इति चत्वारः, चतुर्षु च सन-शब्दो वर्त्तते ।

(२) भागवत् १०।८७।१८ श्लो० । तद्दीयटीकासु च ।

प्राङ्निष्कामसकामाभ्यां भक्तिभ्यां वासनाद्वयम् ॥१०॥
द्वयोरप्येकफलता कर्म्मणोर्भोगत: क्षयात् ॥ ११ ॥
कुमारैर्द्वा:स्थयो: शाप: ॥ १२ ॥
हिरण्यकशिपो: शुच: ॥ १३ ॥
ब्राह्मणो वरलाभश्च प्रह्लादस्य च सम्भव: ॥ १४ ॥
पितापरीक्षणं तस्य बालानां तेन शिक्षणम् ॥ १५ ॥

ततश्चेदं निर्वृत्तमित्याह। प्रागिति। या प्रह्लादस्य भगवत्या-ात्यादहैतुकी भक्तिर्वासना प्राचीनया निष्कामभक्त्या निष्कामत्वं ।मातिशयत्वात्। अतो मुनिशापेन तत्तद्भोगप्रतिबन्धात् स्वाधि-कारस्थितयोरप्यावयोरभिभव:। किमितीश्वरेण न निषिद्ध त्युभयत्राप्युद्भिन्नवैराङ्कुरौ पतिताविति जन्मान्तरेऽपि तामेव ।ासनामनुसन्धाते स्म (१) ॥ १० ॥

आरब्धकर्म्मणो भोगेन क्षयाद्वासनाद्वयस्य फलमेकमेवेत्याह। ।योरिति। एकफलवता श्रीभगवत्सन्निधानलक्षणा। तस्माद् दृष्टचा तद्विघातवासनायामेवेह पातादिहापि तदनुवृत्तिरित्युक्त-तूतीमां स्वरूपम् ॥ ११ ॥

एव स्कन्धार्थं विविच्य क्रमात् पादैरध्यायार्थानाह। कुमारै-रति। द्वा:स्थौ जयविजयौ ॥ १२ ॥

हिरण्येति। शुच: शोका: ॥ १३ ॥

ब्रह्मण इति। तच्छब्दाभ्या प्रह्लाद: ॥ १४—१५ ॥

---

(१) "जन्म जन्म यदभ्यस्तं दानमध्ययनन्तप।
तेनैवाभ्यासयोगेन तच्चैवाभ्यसते नर:" ॥
भामती १।१।१' सू:।

नारदोक्तानुवादश्च हिरण्यकशिपोर्बधः ॥ १६ ॥

प्रह्लादेन नृसिंहेड़ा ॥ १७ ॥

ततोऽस्य शिववद्यशः ॥ १८ ॥

सामान्येन सदाचारः ॥ १९ ॥

तथा त्रिष्वाश्रमेषु च ॥ २० ॥

परिव्राजकधर्म्माश्च ॥ २१ ॥

मोक्षधर्म्मगृहाश्रमे ॥ २२ ॥

नारद इति । ईड़ास्तुतिः ॥ १६ ॥

तत इति । ततो नृसिंहात् । समासगतस्य बुद्धाविच्छेद इति प्रागुक्तम् । अस्य प्रह्लादस्य शिववत् । यथा त्रिपुरबधहेतुत्वेन हरिणा शिवस्य यशोदत्तम् । एवमस्यापि इत्यर्थः । तेन त्रिपुर-बधाख्यानं प्रह्लादस्य यशोनिदर्शनार्थम् । एवमेवैतत्, अन्यथा तदाख्यानं न प्रसक्तं स्यात् । "स एव भगवानाजन् व्यतनोदिह तद् यशः । पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥" (१) इत्युक्त-त्वात् । स एष इति येन प्रह्लादस्य यशोदत्तमित्यर्थः ॥१७—१८॥

सामान्य इति स्पष्टम् ॥ १९ ॥

तथेति । ब्रह्मचारिगृहस्थवानप्रस्थानाम् (२) । तथाशब्दात् सदाचारः ॥ २० ॥

परीति । परिव्राजका यतयः ॥ २१ ॥

मोक्षेति । गृहाश्रमस्थानामित्यर्थः ॥ २२ ॥

---

(१) भागवतम् ७ । १० । ५१ श्लोक. ।

(२) चत्वार आश्रमाः "ब्रह्मचारी गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्" इति ब्रह्मचर्य्यगार्हस्थ्य-वानप्रस्थ-प्रव्रज्याः ।

अद्धादीनि मुमुक्षूणाम् ॥ २३ ॥

यावदध्यायमङ्घ्रयः ॥ २४ ॥

इति हरिलीलायां वोपदेव कृतौ सप्तम-
स्कन्ध विवरणम् ॥ ७ ॥

( समाप्तः सप्तमोऽध्यायः। )

---

श्रद्धेति। मोक्षेप्सूनां गृहस्थानामित्यर्थः। आदिशब्दात् कामक्रोधजयादयः ॥ २३ ॥

यावदिति। यावन्तोऽध्यायास्तावन्तोऽङ्घ्रयः ॥ २४ ॥

इति वोपदेवविरचिते हरिलीलायां मधुसूदनसरस्वती-
प्रणीतं सप्तमस्कन्धविवरणम् ॥ ७ ॥

( इति सप्तमोऽध्यायः ॥ )

मन्वन्तरार्थमध्याय त्रयोविंशतिरष्टमे ॥ १ ॥
मन्वन्तराणि प्रत्येकं ब्रह्माहेषु चतुर्द्दश ॥ २ ॥
चत्वार्य्याद्ये चतुर्थस्थं त्रिषु नागेन्द्रमोक्षणम् ॥ ३ ॥
द्वे पञ्चमे ॥ ४ ॥
अत्र षष्ठस्थं सप्तमेष्वमृतमन्थनम् ॥ ५ ॥
त्रयोदशेऽष्टौ ॥ ६ ॥
नवसु सप्तमे बलिबन्धनम् ॥ ७ ॥

एवं सप्तमार्थमुक्त्वाऽष्टमार्थमाह । मन्वन्तरेति(१) । स्पष्टम् ॥१॥

मन्वन्तरसंख्यामाह । मन्वन्तराणीति । स्पष्टम् ॥ २ ॥

चतुर्द्दशत्वमेवाह । चत्वारीति । आद्येऽध्याये । स्वायम्भुव-स्वारोचिषोत्तम-तामसाख्यानि चत्वारि । चतुर्थ इति । अत्र एषु व चतुर्षुमध्ये चतुर्थमन्वन्तरे जाते । नागेन्द्रमोक्षणं (२) त्रिषु अध्यायेषूक्तम् ॥ ३ ॥

द्व इति । पञ्चमेऽध्याये रैवतचाक्षुषाख्ये ॥ ४ ॥

अत्रेति । अत्रानयोर्मध्ये षष्ठे चाक्षुषाख्ये जातम् । अमृतमन्थनं सप्तमेषूक्तम् । त्रयोदशेति । त्रयोदशाध्याये वैवस्वत-सावर्णी-दक्ष-ब्रह्म-धर्म्म-रुद्र-देवेन्द्रपूर्व्वपदानां सावर्णीनामष्टौ ॥ ५—६ ॥

नवस्विति । सप्तमे वैवस्वताख्ये जातं बलिबन्धनं नवसूक्तम् । चाक्षुषवैवस्वत-सन्धौ जाता मत्स्यकथा त्रयोविंशे । अत्र गम्यमाने त्रयोविंशतिरध्यायाश्चतुर्द्दशमन्वन्तराणि स्युः । ननु पुरुषस्य हेय-मुपादेयञ्च शास्त्राणां विषयः ॥ ७ ॥

(२) भागवतम् ८ । १—१२ श्लोक ।

त्रयोविंशे मत्स्यकथा षष्ठ सप्तम सन्निजा ॥ ८ ॥
मन्वन्तरं सतां धर्म्मो मनुभिर्यत् प्रकाश्यते ॥ ९ ॥
प्रकाशः स्मरणाख्यानैः स्वे स्वे सर्षिभिरन्तरे ॥ १० ॥
विपद्यात्मानमीशाने सम्पद्यार्थिषु चार्पयेत् ॥ ११ ॥
उभयत्र प्रतिज्ञातं निर्वहेदिति सद्विधा ॥ १२ ॥
गजेन्द्रमोचणेऽम्भोधि-मन्थने बलिबन्धने ॥ १३ ॥
सः व्यक्तो गजाब्धि बलिभिः ॥ १४ ॥

न च मन्वन्तराभिधानेन किमपि ज्ञातुमादातुं शक्यमत आह। मन्वन्तरमिति। यद् यस्मान्मनुभिरसौ प्रकाश्यते। अतः सद्धर्म्मे मन्वन्तरशब्दो रूढ़ इत्यर्थः। अवयवार्थगतिः 'अश्वकर्णादि'-वत् ॥ ८—९ ॥

प्रकाश इति। प्रकाशनम्। अन्तरमवकाशाधिकरणमित्यर्थः। आचरणं ऋषिभिः सहितैर्मनुभिः स्वे स्वेऽधिकारे तपः पूते चेतसि भगवत्प्रसादादेव धर्म्मतत्त्वस्मरणम् (१)। ततस्तदाचरणं ततोऽन्येभ्यस्तत्कथनमिति क्रमेण क्रियत इत्याह ॥ १० ॥

विपद्येति। उभय इति। कः पुनस्तैः प्रकाशितो धर्म्म इति तमाह ॥ ११—१२ ॥

स इति। अर्थिषु चेति चकारादीश्वरे च। उभयत्र सम्पदि विपदि च। तत्त्वैविध्यमेवोन्मूलयति मूले। गजेन्द्रेति। स व्यक्तः स धर्म्मः एषु स्पष्टः। तद्यथा। विपद्यात्मानमीशानेऽर्पयेत्।

(१) "तद्धैतद् ब्रह्मा प्रजापतये उवाच। प्रजापतिर्मनवे, मनुः प्रजाभ्यः" छान्दोग्ये ८।१५।

यथा कृतं बलिना तं झषो वेत्ति तत्त्वतः ॥ १५ ॥

अतएवोपदिष्टा हि मनवे तेन ताः कथाः ॥ १६ ॥

ग्राहाद्बन्धः ॥ १७ ॥

हरेर्मोक्षः ॥ १८ ॥

प्रागजन्म- ॥ १९ ॥

इति त्रिको गजे ॥ २० ॥

मन्थोऽसुरैः ॥ २१ ॥

मन्दरासः ॥ २२ ॥

थार्पितो गजेन्द्रेण । सम्प्रदर्थिष्वीश्वरे च । यथा चौरोदेनोभयत्र-तिज्ञातं निर्वहेत् ॥ १३—१४ ॥

यथेति । तन्त्रिविधधर्म्मं जानाति झषो मत्स्यः । अतएवो-दिष्टवान् ॥ १५ ॥

अतएवेति । तेन नागेन्द्रमोक्षणादयश्चतस्रः कथा ऋषिणोक्ताः । त्वभिप्रायं विना यदृच्छयैवेत्यर्थः ॥ १६ ॥

एवं स्कन्धार्थं निरूप्याध्यायार्थानाह । ग्राहेति । अर्थात् जस्य ग्राहो नक्रः ॥ १७ ॥

हरेरिति । स्पष्टम् ।

प्रागिति । प्रागजन्म इन्द्रद्युम्नत्वं च ॥ १९ ॥

इतीति । गजविषये ॥ २० ॥

मन्थ इति । विष्णुप्रेरितैर्देवैरसुरैः सह यो मन्थोऽमृतमथने ।क्यम् ॥ २१ ॥

मन्दरेति । आसः क्षेपणं समुद्रे इति शेषः ॥ २२ ॥

विषग्रासः ॥ २३ ॥

स्व (स्र) सुधा। श्रीहृतिः ॥ २४ ॥

सुरैर्जयः ॥ २५ ॥

शम्भोः स्त्रीच्छा ॥ २६ ॥

इत्थं सप्तकोऽर्णवे ॥ २७ ॥

बलेर्जयः ॥ २८ ॥

व्रतोऽदित्याः ॥ २९ ॥

हरेर्जन्म ॥ ३० ॥

अर्थिता बलेः ॥ ३१ ॥

विषेति। रुद्रेणेति शेषः ॥ २३ ॥

( स्व-स्र ) श्रीरिति। श्रियः हृतिर्वरणम् ॥ २४ ॥

सुधेति। श्रीपदाहृतिरित्यनुवर्त्तनीयम् ॥ २४ ॥

सुरैरिति। स्पष्टम् ॥ २५ ॥

शम्भोरिति। स्त्रिय इच्छादर्शनम्। भगवद्धृत-स्त्रीरूपावलोकनमित्यर्थः ॥ २६ ॥

इत्थमिति। स्पष्टम् ॥ २७ ॥

बलेरिति। स्पष्टम् ॥ २८ ॥

व्रत इति। आदित्याभिधेयः। "नियमो व्रतमस्त्री स्यात्" (१) इत्युक्तत्वात् पुंस्त्वम् ॥ २९ ॥

हरेरिति। स्पष्टम् ॥ ३० ॥

अर्थितेति। हरेरित्येव ॥ ३१ ॥

---

(१) अमरकोष. ब्रह्मवर्ग ९९—१०० प.।

बलेर्दित्सा ॥ ३२ ॥

हरेर्वृद्धिः ॥ ३३ ॥

निग्रहानुग्रहौ बलेः ॥ ३४ ॥

प्रह्लादसूक्तयश्च ॥ ३५ ॥

एवमध्याय नवकं बलौ ॥ ३६ ॥

इति हरिलीलायां वोपदेव कृतौ अष्टम-
स्कन्धविवरणम् ॥
इत्यष्टमोऽध्यायः ॥ ८ ॥

---

बलेरिति । दातुमिच्छा ।

हरेरिति । स्पष्टम् ॥ ३३ ॥

निग्रहेति । निग्रहो बद्धत्वात् । अनुग्रहस्तत्सान्निध्याभ्युपगमात् ॥ ३४ ॥

प्रह्लादेति । चशब्दात् क्रतुसमाप्तिः ॥ ३५ ॥

एवेति । स्पष्टम् । प्रथमं पञ्चम त्रयोदश त्रयोविंशतीनां अध्यायार्थं आदावेवोक्तः ॥ ३६ ॥

इति वोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वती-
प्रणीतमष्टमस्कन्धविवरणम् ॥
इत्यष्टमोऽध्यायः ॥ ८ ॥

---

नवमे चतुर्विंशत्यध्यायीशानुकीर्त्तने ॥ १ ॥
ईशा भूपतयस्तत्र रामकृष्णादयः स्वयम् ॥ २ ॥
अन्ये च तन्नियोगेन तत्कथेशानुकीर्त्तनम् ॥ ३ ॥
इलः ॥ ४ ॥
पृषध्रः शर्यातिरम्बरीषोऽजविप्रयोः ॥ ५ ॥
मान्धाताऽथ हरिश्चन्द्रः सागरोऽथ भगीरथः ॥ ६ ॥
रामराष्ट्रभ्रंशलब्ध्योः ॥ ७ ॥
कुशोऽथ मिथिलेश्वरः ॥ ८ ॥
ऐलः ॥ ९ ॥

एवमष्टमार्थमुक्त्वा नवमार्थमाह। चतुर्विंशत्यध्यायानां समा-
हारश्चतुर्विंशत्यध्यायी। किन्तदीशानुकीर्त्तनमित्यत आह। ईशेति।
ईशा राजानः तथापि रामकृष्णादयः स्वयं ईशाः अन्ये तु
तन्नियोगादीशाः तेषां ईशानां ईशानुवर्त्तिनां कथा ईशानु-
कथेत्यर्थः। तानेवाह ॥ १—३ ॥

इल इति। प्रथमेऽध्याये तात्पर्य्येण निरूपण इत्यर्थः ॥ ४ ॥

पृषध्र इति। अजो विष्णुः। विप्रो दुर्वासाः। विषये सप्तमी।
अम्बरीषस्य विष्णुभक्तिश्चतुर्थे विप्रभक्तिःपञ्चम इत्यर्थः ॥ ५ ॥

मान्धातेति। राष्ट्रभ्रंशो रामस्य दशमे। राष्ट्रलाभस्त्वेका-
दशे। राष्ट्रं देशः ॥ ६ ॥

कुश इति। जनक इत्यर्थः ॥ ७—८ ॥

ऐल इति। पुरूरवा इत्यर्थः ॥ ९ ॥

रामार्ज्जुनक्षत्रबधयोः ॥ १० ॥

क्षत्रद्रुगः ॥ ११ ॥

ययातेर्भुक्तिमुक्त्योश्च ॥ १२ ॥

पुरु त्रिषु ॥ १३ ॥

यदुर्द्वयोः ॥ १४ ॥

दौष्मन्ति-रन्ति-भीष्माणां प्राधान्याद्वृष्णिकृष्णयो. ॥ १५ ॥

चतुर्विंशतिरित्येते राजानोऽध्याय-नायकाः ॥ १६ ॥

रामेति । रामो जामदग्न्यः । अर्ज्जुनः कार्त्तवीर्य्यः । क्षत्रमिति जातिनिर्द्देशात् क्षत्रियमात्रम् । अर्ज्जुनबधश्च क्षत्रबधश्च तयोः । बधशब्दः प्रत्येक द्वन्द्वात् श्रुतत्वाद् अर्ज्जुनबधो रामेण पञ्चदशे । क्षत्रबधः षोड़शे ॥ १० ॥

क्षत्रेति । ययातेरिति । ययातेर्भुक्तिरष्टादशे । मुक्तिरेकोनविंशे ॥ ११—१२ ॥

पुरुरिति । पुरोर्वंशः । वंशवंशिनोरभेदोपचाराद् एवम् ॥१३॥

यदुरिति । ननु कुतः पुरु यदु त्रिषु द्वयोश्चेत्यत आह ॥१४॥

दौष्मन्तिरिति । दौष्मन्तेर्भरतः रन्तिदेवः भीष्मः शान्तनवः । एतेषां पुरोर्वंशप्रधानत्वात् । त्रिष्वध्यायेषूक्ताः (१) । वृष्णेः कृष्णस्य च प्राधान्याद् यदुवंशद्वयोर्वृष्णि कृष्णयोरुक्तावित्यर्थः ॥ १५ ॥

चतुर्विंशतिरिति । सत्स्वप्यनेकेषु बहुषु 'प्राधान्येन व्यपदेशा

---

(१) नवमस्कन्धोक्त-त्रिषु अध्यायेष्वित्यर्थ. ।

रन्तिदेववृत्तं महाभारते शान्तिपर्व्वणि ।

रामौ ययात्यम्बरीशौ चत्वारोऽष्टौ हि कर्म्मभि: ॥१७॥
त्रयोदशैकादशभि: क्रमात्तत्रार्कसोमजा: ॥ १८ ॥

इति श्रीहरिलीलायां वोपदेवकृतौ नवम-
स्कन्धविवरणम् ॥
इति नवमोऽध्याय: ॥ ९ ॥

---

भवन्ति' इति चतुर्विंशतिरित्युक्तम्। प्राधान्यं चैषां चरित्रकथनात् केषाञ्चित्तु गुणोत्कर्षात् ॥ १६ ॥

नन्वेवञ्चेद्विंशतिरेव स्यु: तत्कथं संख्येत्यत आह। रामाविति। रामस्य रामस्य रामौ दाशरथि-यामदग्न्यौ। ययातिश्चाम्बरीषश्च तौ एते यद्यपि चत्वारस्तथाप्यष्टौ ज्ञेया:। यस्माद्धि कर्म्मभिश्चरित्रैर्भिन्ना:। कर्म्मभेदाद्धि कर्त्तृभेद:। न ह्येकस्यैव: पक्ता स एव भोक्ता, पाकविशिष्टस्यान्यत्वात्। एवं रामादिष्वपि तत्तत्कर्म्मविशिष्टत्वादन्यत्वमेव दर्शितञ्च। एषां प्रत्येकं द्वन्द्वे कर्म्मणि अतश्चतूर्णामष्टत्वमिति सुष्ठूक्तम्। चतुर्विंशतिरिति ॥ १७ ॥

त्रयोदशेति। त्रयोदशभि: सूर्य्यवंश्यराजान: एकादशभि: सोमवंश्या: सोमवंशोत्तराख्यान दशमवीजार्थञ्च ॥ १८ ॥

इति वोपदेवविरचित हरिलीलाया मधुसूदनसरस्वती-
प्रणीतं नवमस्कन्धविवरणम् ॥
इति नवमोऽध्याय: ॥ ९ ॥

---

निरोधो दशमस्कन्धे नवत्यध्याय ईरितः ॥ १ ॥
निरोधो नाम सृष्टानां संहारः ॥ २ ॥
स चतुर्व्विधः ॥ ३ ॥
नैमित्तिकः प्राकृतिको ब्रह्मणेति दिनायुषोः ॥ ४ ॥
नित्यः प्रतिक्षणं मुक्तिरात्यन्तिक इति स्मृतिः ॥ ५ ॥
इति स्मृतः ॥ ६ ॥

एवं नवमार्थमुक्त्वा दशमार्थं क्रमात् प्राप्तमाह। निरोध इति। नवतिरध्याया यस्मिन् स तथा ॥ १ ॥

निरोधलक्षणमाह। निरोधानामिति। स्पष्टमस्यार्थः ॥ २ ॥

तद्भेदानाह। स चेति ॥ ३ ॥

नैमित्तिकेति (१)। तत्र निमित्तिकः। यो ब्रह्मणो युगस्यान्ते युगसहस्रावसाने संहारः स नैमित्तिकः। निमित्तं ब्रह्म-निद्रा तद्धेतुकत्वात्। यस्तु ब्रह्मण आयुषोऽन्ते द्विपरार्द्धावसाने स प्राकृतिकः। तत्र महदादि सप्तप्रकृतयः प्रधाने लीयन्ते। यस्तु क्षणे क्षणे कालेन पच्यमानेषु भूतेषु अपचयः स नित्यः। प्रत्यभिज्ञातुः सेयं दीपज्वालेतिवदिति भावः। स च "नित्यदा सर्व्वभूतानां ब्रह्मादीनां परन्तप। उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षत" इत्यत्रोक्तेः (२)। अहरहर्भूतसंक्षयो वा नित्य(:)मुक्ति-

---

(१) भागवतम् १२। ४—३८ श्लोक।
"नित्यं नैमित्तिकश्चैव प्राकृत्यन्तिकौ तथा"।
नित्यं सङ्कीर्त्यते तेनाख्या मुनिभिः प्रतिसञ्चरः ॥
कूर्म्मपुराणम् ४२ अ', २५ श्लोकः।

(२) भागवतम् १२। ४ ३५ श्लोक।

नैमित्तिको निरोधोऽन्यो धर्म्मग्लानिनिमित्तकः।
भूमिभारावताराख्यो यदर्थं जन्ममापतेः॥ ७॥
स एष दशमे प्रोक्तः मुक्तेरेकादशे ततः॥ ८॥

रात्यन्तिकः। यस्तु ब्रह्मणो जीवस्योपाधीनां महदादीनां तत्-साक्षात्कारादत्यन्तसमुच्छेदः स मुक्त्याख्य आत्यन्तिकः। ततः परं संसाराभावात्॥ ४—५॥

ननु किमेव चातुर्विध्यं स्वविकल्पितं नेत्याह। इतीति। ऋषिभिरित्यर्थः। (तत्रार्थे) स्मरणञ्च "नित्यनैमिकश्चैव तथा प्राकृतिको लयः। आत्यन्तिकश्च कथितः कालस्य गति-रीदृशी" (१)॥ ६॥

नैमित्तिकस्य भेदान्तरमाह। नैमित्तिक इति। अन्योऽपि भूमिभारावताराख्यो नैमित्तिको लयः। तत्र हि धर्म्मग्लानि-निमित्तं यदर्थञ्च लक्ष्मीपतेर्जन्म। तदुक्तम् "यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्॥" (२) इति। अवश्यञ्चैतदेष्टव्यम्। अन्यथा पञ्च-प्रलयस्वीकारप्रसङ्गात्। न चाद्ययोरस्यान्तर्भावः तन्निमित्तस्या-भावात्। नाप्यन्तयोः कादाचित्कत्वादनात्यन्तिकत्वाच्च। न चायं नास्त्येव पुराणेषु शतशः श्रुतत्वात् (३)॥ ७॥

कः पुनरेषु दशमार्थ इति तत्राह। स एष इति। स भूभारावताराख्यः। मुक्तेरिति। स्पष्टं भाष्यार्थम्॥ ८॥

---

(१) भागवतम् १२।४।३८ श्लोकः।
(२) श्रीमद्भगवद्गीता ४।७ श्लोकः।
(३) विष्णुपुराणम् १।७।३८। भागवतम् १२।१०।४१।

तत्रान्ये द्वादशे ॥ ९ ॥
शुद्धं निरूपयितुमाश्रयम् ॥ १० ॥
तस्यावताराः कर्त्तारो हरेस्तेषु महत्तमः ॥ ११ ॥
कृष्णावतारस्तस्यातश्चरितं दशमे ततः ॥ १२ ॥

तत्रेति । प्राकृतिकनित्यनैमित्तिकास्त्रयः द्वादशस्य चतुर्थेऽध्याये ॥ ९ ॥ (१)

ननु तत्राश्रयेऽभिप्राये किं लयोक्त्या ? तत्राह । शुद्धमिति । शुद्धं निरुपाधिमन्येभ्यः पृथग्भूतं, कालकलयाऽसंस्पृष्टमित्यर्थः । तस्मादाश्रयोपयोगादन्येषां तत्रोक्तिर्युक्ता । न चाश्रयं शुद्धं वक्तुं भूभारनिरोधोऽपि तत्रोच्यतामिति वाच्यम् ? । साक्षादाश्रयस्यैव हरेरिह कर्त्तृत्वेन नाशशङ्काया अनुदयात् । "तमाहुरात्यन्तिकमङ्ग-संप्लव"मित्यान्तिकस्तत्रोक्तोऽप्यनुक्तवत् । साधनानिर्द्देशेन प्राधान्याभावात् । साधनञ्च कर्म्मज्ञान इति वक्ष्यति एकादशे (२) ॥१०॥

नन्ववतारान्तरेणापि भूभारनिरोधस्य सुकरत्वात् तदेव दशमेऽभिधेयमिति कृष्णकथैव किं कथ्यते इत्यत आह । तस्या इति । तेऽवतारा महान्तः । अयमेष्वतिशयेन महान् । अतस्तस्य महत्त्वात् तच्चरितं दशमे विस्तृतं कृतम् । महत्तमत्वं तु अविलुप्तसर्व्वशक्तित्वात् । "कृष्णस्तु भगवान् स्वयमिति" (३) उक्तत्वाच्च । अयमर्थः—येन केनाप्यवतारेण भूभारनिरोधेऽभिधेये श्रीकृष्णस्य

(१) विष्णुपुराणनयेऽपि प्रलयत्रैविध्यम्, यथा नैमित्तिकः, आत्यन्तिकः, प्राकृतिकश्चेति । विष्णुपुः ६ । १ । ७ अ. ।

(२) श्रीमद्भागवतीयैकादशस्कन्धस्य श्रीभगवदुद्धवसंवादो द्रष्टव्यः ।

(३) श्रीमद्भागवतम् १ । ३ । २८ श्लोकः ।

गोकुले मथुरायान्तद् द्वारकायां कृतस्त्रिधा ॥ १३ ॥
चतुश्चत्वारिंशोक्तं सप्तभिस्तत् परैक्रमात् ॥ १४ ॥
प्राकट्य बाल्यपौगण्डं कैशोरप्रौढ़भेदतः ॥ १५ ॥
पञ्चधा गोकुलकृतं तच्च कंसबधाभिधम् ॥ १६ ॥
आपञ्च वर्षाद्बाल्यं स्यात् पौगण्डं नववर्षतः॥ १७ ॥
आषोड़शात्तु कैशोरं यौवनञ्च ततः परमिति॥ १८॥

प्रधानत्वात् तद्द्वारैवोक्तः। न चास्य निरोधस्य तृतीयादिष्वपि सद्भावात्। तत्राभिधेयसङ्कर-प्रसङ्गः। अंशतस्तत्र सद्भावेन सङ्करे सर्व्वस्य सर्व्वत्र सम्भवादिति प्रसङ्गप्राप्तेः॥ ११—१२ ॥

एवं स्कन्धार्थं समादाय प्रकरणान्याह। गोकुल इति। तच्छ्रीकृष्णचरितं गोकुलादिभेदेन त्रिधाकृतम्। अत्रोक्तप्रकरण-त्रयमित्यर्थः॥ १३ ॥

तेष्वध्यायान् विभजति क्रमात्। चतुरिति। ऊनचत्वारिंशत्-संख्यैः गोकुलकृते पञ्चावान्तरप्रकरणान्याह॥ १४ ॥

प्राकट्येति। प्राकट्यं प्रकटता। बाल्यादयो वयोभेदाः॥१५॥

तल्लक्षणन्तु "आपञ्च वर्षाद्बाल्यं स्यात् पौगण्डं नववर्षतः। आषोड़शात्तु कैशोरं यौवनञ्च ततः परम्"। इति स्मृतावुक्तम् (१)। "यद्यप्येकादशसमास्तत्र गूढ़ार्च्चिः सबलोऽवसत्"। सबलोऽवसत्। इति तृतीयस्कन्धोक्त्या गोकुलेनैतावन्ति वर्षाणि स्थितिः। तथापि तत्तदवस्थायोग्यस्य कार्य्यकृत-(प्रकटित)त्वादेवमुच्यते। (यद्वा-एकादशसमा गूढ़ार्च्चिः) ततः पर प्रकटार्च्चिरिति व्याख्येयम्।

(१) स्वामिना दशमस्कन्धटीकायां धृतोऽयं श्लोकः।

चत्वारिंशदिमेऽध्यायाः कंसबधैस्त्रिभिः ॥ १९ ॥
ततश्च पौगण्डवयः श्रितौ व्रजे ॥ २० ॥
किशोरौ श्यामलश्वेतौ ॥ २१ ॥
चतुर्भिर्दशभिः प्रोक्तं सप्तभिर्नवभिः क्रमात् ॥ २२ ॥
कंसभीर्भाविनः कृष्णात् ॥ २३ ॥

वयोऽन्यथाऽनुपपत्तिरेवात्र प्रमाणम्। अस्मिंश्च पक्षे उपनयनं द्वाविंशतिवर्षे ज्ञेयम्। न चान्यथा कल्पने प्रमाणमस्ति तस्य पञ्चविधस्य गोकुलकृतस्येह कंसबध इति संज्ञाक्रियते ॥१६—१८॥

तदुपयोगश्च। चतुरिति। इत्यत्र लाघवेन छन्दोऽनुरोधेन च व्यवहारः। बाल्यादिभेदचतुष्के। एवमिति। "एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे" (१) ॥ १९ ॥

तत इति। किशोरौ इति। श्यामलश्वेतौ। "प्रलम्बलीला-हसितावलोकनै"(२)रित्यादिमूलश्लोकाः मूलम्। प्रगल्भलोलेति। लीलायाः प्रौढ़त्वं—भगवत् प्रौढ़त्वं नान्तरीयकम् ॥ २०—२१ ॥

प्राकट्यादिषु पञ्चसु क्रमाद् अध्यायान् विभजति। चतुर्भिरिति। चतुर्भिः प्राकट्यं तस्य द्वितीयाध्याये निवृत्तत्वेऽपि "किं मया हतया मन्द। जातः खलु तवान्तकृत्" (३) इति योगनिद्रोक्तया कंसादीन् प्रति प्रकटत्वस्य चतुर्थे दर्शितत्वाच्चतुर्भिरित्युक्तम्। अर्कैरिन्द्रसंख्याकैश्चतुर्दशभिरित्यर्थः ॥ २२ ॥

एवं प्रकरणार्थमुक्त्वा गोकुलकृतं क्रमात् पादैरध्यायार्थानाह।

---

(१) श्रीमद्भागवतम् १०। १४। ६१ श्लोक।
(२) श्रीमद्भागवतम्। १०। ४१। २७ श्लोकः।
(३) भागवतम् १०। ४। १२ श्लोकः।

देवक्यान्तस्य सम्भवः ॥ २४ ॥

जातस्य गोकुलप्राप्तिः ॥ २५ ॥

निद्रोक्तात् कंसभीः पुनः ॥ २६ ॥

व्रजे जन्मोत्सवन्तस्य तेनाथो पूतनाबधः ॥ २७ ॥

अनस्तृणावर्त्तभङ्गः ॥ २८ ॥

तस्य नामानि चापरम् ॥ २९ ॥

दामोदरत्वनटनं यमलार्ज्जुनभञ्जनम् ॥ ३० ॥

बधश्च वत्सवकयोः ॥ ३१ ॥

तथाघासुरभोगिनः ॥ ३२ ॥

कंस इति भाविनः भविष्यतः। "अस्यास्तामष्टमो गर्भो हन्तायां वहसे बुधे"(१)त्युक्तत्वाद् भावित्वम् ॥ २३ ॥

देवक्यामिति। स्पष्टम् ॥ २४ ॥

निद्रेति। निद्रयोक्ताद्वाक्यात्। भावेक्तः। प्राकत्यमुक्त्वा बाल्यमाह ॥ २५—२६ ॥

व्रजेति। तच्छब्दाभ्यां कृष्णः। अथोत्सवानन्तरम् ॥ २७ ॥

अन इति। अनः शकटम् ॥ २८ ॥

तस्येति। नामानि नामकरणम् ॥ २९ ॥

दामोदरेति। स्पष्टानि। तथेति। तथाशब्दाद्बधः। भोगी सर्पः ॥ ३०—३२ ॥

---

(१) भागवतम १ । १। ३४ श्लोक.।

वत्सचौरब्रह्ममोहः ॥ ३३ ॥
ब्रह्मणा स्तवनं हरेः ॥ ३४ ॥
रामेण धेनुकवधः ॥ ३५ ॥
कालीयस्य स्वयं दमः ॥ ३६ ॥
व्रजस्य रक्षणं दावात् ॥ ३७ ॥
प्रालम्बो हलिना बधः ॥ ३८ ॥
दावाद् गोत्राणमैषिके ॥ ३९ ॥

वत्सेति । वत्सांश्चोरयतीति वत्सचौरः । स चासौ ब्रह्मा तस्य मोहः ॥ ३२—३३ ॥

ब्रह्मणेति । स्पष्टम् ॥ ३४ ॥

पौगण्डमाह । रामेणेति । रामेणेति करणे तृतीया न कर्त्तरि । इह स्कन्धे भगवत एव कथा नायकत्वेन कर्त्तृत्वात् । ततश्च रामद्वारा हरिणा धेनुकवधः कृत इत्यर्थः । अतएवोत्तर-वाक्ये स्वयं ग्रहणम् । एव वक्ष्यमाणेषु प्रद्युम्नार्ज्जुनभीमेषु । तदुक्तम् "यास्यम्यदर्शनमलं बल भीमपार्थव्याजाह्वयेन हरिणा निलयस्तदीयम्" (१) इति ॥ ३५ ॥

कालीयस्येति । स्पष्टम् ॥ ३६ ॥

व्रजस्येति । दावो वनवह्निः ॥ ३७ ॥

प्रालम्ब इति । प्रालम्बः प्रलम्बसम्बन्धी । हलिना रामेण ॥ ३८ ॥

दावादिति । ऐषिके इषिकावणे ॥ ३८—३९ ॥

---

(१) भागवतम् २ । ७ । ३५ श्लोकः ।

प्रावृट् शरदृतुश्रियौ ॥ ४० ॥
गोप्यानन्दो वेणुरवात् ॥ ४१ ॥
गोपीनर्म्माम्बिकार्च्चने ॥ ४२ ॥
यज्ञपत्नीप्रसादश्च ॥ ४३ ॥
भङ्ग इन्द्रमखस्य च ॥ ४४ ॥
सप्ताहं गोकुले वृष्टिः ॥ ४५ ॥
इन्द्रादेशेन कारिता ॥ ४६ ॥
गोवर्द्धनस्योद्धरणम् ॥ ४७ ॥
गोपानां देवता मतिः ॥ ४८ ॥

प्रावृड़िति। प्रावृट् च शरच्च तौ ऋतू च तयोः श्रियौ शोभे ॥ ४० ॥

गोप्येति। रवः शब्दः ॥ ४१ ॥

गोपीति। नर्म्म परिहासः। अम्बिकार्च्चने क्रियमाणे सति ॥ ४२ ॥

यज्ञपत्नीति। यज्वानो याज्ञिकाः। अनुक्तेऽपि नाम्नि भगवतः कर्त्तृत्वं ज्ञेयम् ॥ ४३ ॥

भङ्ग इति। सप्त च तान्यहानि च सप्ताहः। तं सप्तदिनम् ॥ ४४—४५ ॥

इन्द्रेति। मेघैः इन्द्रस्यादेशः इन्द्रादेशः। आदेशः आज्ञा। तया वृष्टिः कारिता ॥ ४६ ॥

गोवर्द्धनस्येति। स्पष्टम् ॥ ४७ ॥

गोपानामिति। कृष्णो देवोऽयमिति बुद्धिः ॥ ४८ ॥

श्रीकृष्णाभिषेको गोदेवैः ॥ ४९ ॥

वरुणान्नन्दमोचणम् ॥ ५० ॥

सम्भोगो निशि गोपीभिः ॥ ५१ ॥

विप्रलम्भोलसद्वने ॥ ५२ ॥

गोपीविरह-गीतानि ॥ ५३ ॥

ताभिः सञ्जल्पनं हरेः ॥ ५४ ॥

रासक्रीड़ा च ललिता ॥ ५५ ॥

मोचो विद्याध्रयचयोः ॥ ५६ ॥

व्रजस्थ-गोपिका गीतम् ॥ ५७ ॥

कृष्णेति । गावश्च देवाश्च ॥ ४९ ॥

वरुणेति । स्पष्टम् ॥ ५० ॥

कैशोरमाह । सम्भोग इति । सम्भोगः सुरतम् ॥ ५१ ॥

विप्रलम्भ इति । वियोगः । गोपीभिरित्येव लसत् शोभमानं वनम् ॥ ५२ ॥

गोपीति । स्पष्ट सूत्रस्यार्थः ॥ ५३ ॥

ताभिरिति । सञ्जल्पन सुख गोष्ठी ॥ ५४ ॥

रासक्रीडेति । ललिता रम्या हरेर्गोपीभिरित्येव ॥ ५५ ॥

मोच इति । विद्याध्रो विद्याधरः सुदर्शनः । "मूल-वेभुजादित्वात् कः" (१) । यच. शङ्खचूड़ः ॥ ५६ ॥

व्रजस्थेति । स्पष्टम् ॥ ५७ ॥

---

(१) पाणिनीये ।

हतेरिष्टे च कंसभीः ॥ ५८ ॥

केशिव्योमवधश्चैव ॥ ५९ ॥

अक्रूरयानं व्रजं प्रति ॥ ६० ॥

मथुरा कृष्णयानञ्च ॥ ६१ ॥

अक्रूरेण हरेः स्तुतिः ॥ ६२ ॥

कृष्णस्य मथुरा-यानम् ॥ ६३ ॥

कंसमल्लरणोद्यमः ॥ ६४ ॥

कृष्णेण मल्लहननम् ॥ ६५ ॥

हते कंसे सुरोत्सवः ॥ ६६ ॥

प्रौढ़िमाह। हतेति। सप्तम्यन्तं गुणभूतं प्रथमान्तं प्रधानम् ॥ ५८ ॥

केशीति। केशी व्योमश्च तयोर्वधः। चकारान्नारदोक्तिश्च ॥ ५९ ॥

अक्रूरेति। स्पष्टम् ॥ ६० ॥

मथुरेति। चकाराद् गोपीनां विरहदुःखञ्च। "अक्रूरस्तावुपामन्त्र्य" (१) इत्याद्युत्तराध्यायवीजम् ॥ ६१ ॥

अक्रूरेति। स्पष्टमर्थः ॥ ६२ ॥

कृष्णेति। कुवलयापीड़वधस्तु तत्प्रसङ्गात् ॥ ६३ ॥

कंस इति। कंसस्य ये मल्लास्तेषां रणोद्यमः ॥ ६४ ॥

कृष्णेणेति। स्पष्टार्थम् ॥ ६५ ॥

---

(१) भागवतम् १०।३९।४० श्लोकः।

चतुश्चत्वारिंशदिमेऽध्यायाः कंसबधेऽङ्घ्रिभिः ॥ ६७ ॥
कृष्णस्य विद्योपादानमुद्धवस्य ब्रजागमः ॥ ६८ ॥
आश्वासनञ्च गोपीनाम् ॥ ६९ ॥
कुब्जाक्रूरप्रियं हरेः ॥ ७० ॥
सङ्गोऽक्रूरस्य कुरुभिर्जरासन्धपराजयः ॥ ७१ ॥
यवनस्य बधः ॥ ७२ ॥
अध्यायैः सप्तभिर्माथुरं यशः ॥ ७३ ॥
कृष्णोऽभिलाषो रुक्मिण्या रुक्मिणी-हरणं हरेः ॥७४॥
रुक्मिणश्च पराभूतिः ॥ ७५ ॥

हत इति । स्पष्टम् । चतुरिति । पञ्चविधस्यापि गोकुलकृतस्य कंसबधसंज्ञेति प्रागुक्तम् ॥ ६६—६७ ॥

अथ मथुराकृत क्रमात्पादैरध्यायार्थानाह । कृष्णस्येति । स्पष्टम् ॥ ६८ ॥

आश्वासनेति । उद्धवेनेति विपरिणमनीयम् ॥ ६९ ॥

कुब्जेति । कुब्जा चाक्रूरश्च तयोः प्रियं तयोर्गृहागमनाद् हरेः सम्बन्धि ॥ ७० ॥

सङ्ग इति । स्पष्टमस्यार्थः ॥ ७१ ॥

यवनेति । स्पष्टम् ॥ ७२ ॥

अध्यायैरिति । स्पष्टम् ॥ ७३ ॥

अथ द्वारकाकृते क्रमात्पादैरध्यायार्थानाह । कृष्ण इति । स्पष्टम् ॥ ७४ ॥

रुक्मिण इति । पराभवः चकारादन्येषां राज्ञाम् ॥ ७५ ॥

प्रद्युम्नाच्छम्बरः चयः ॥ ७६ ॥

स्यमन्तकस्याहरणम् ॥ ७७ ॥

सत्यभामासमुद्वहः ॥ ७८ ॥

कालिन्द्यादि-विवाहश्च ॥ ७९ ॥

भौमं हत्वा द्रुमा हृतिः ॥ ८० ॥

रुक्मिण्या नर्म्म रहसि ॥ ८१ ॥

रुक्म्यन्तो नप्तुरुद्वहे ॥ ८२ ॥

वाणेन बन्धनं नप्तुर्वाणस्य हरिणा जयः ॥ ८३ ॥

नृगस्य शरटत्वान्तः ॥ ८४ ॥

हलिनो यमुना भिदा ॥ ८५ ॥

प्रद्युम्नेति। स्पष्टम् ॥ ७६ ॥

स्यमन्तक इति। आहरणं आनयनम्। ऋचसकाशात् ॥ ७७ ॥

सत्येति। समुद्वाहो विवाहः। स च पूर्व्वाध्यायान्तःस्थोऽप्युत्तराध्यायार्थं सत्त्वोक्तम् ॥ ७८ ॥

कालिन्दीति। कालिन्दी यमुना आदिशब्दाद् मित्रविन्दानाग्नजिती भद्रालक्ष्मणादिः ॥ ७९ ॥

भौममिति। द्रुमः पारिजातः आहृतिरानयनम् ॥ ८० ॥

रुक्मिण्येति। स्पष्टम् ॥ ८१ ॥

रुक्मीति नप्तुरनिरुद्धस्य उद्वाहे विवाहे ॥ ८२ ॥

वाणेति। स्पष्टम् ॥ ८३ ॥

नृगस्येति। सरटत्वं ककलासत्वम् ॥ ८४ ॥

हलिनेति। आकर्षणम् ॥ ८५ ॥

काशीश-पौण्ड्रकवधः ॥ ८६ ॥

रामेण द्विविदचयः ॥ ८७ ॥

पराभवः कुरूणाञ्च ॥ ८८ ॥

हरेर्गार्हस्थ्यमद्भुतम् ॥ ८९ ॥

जरासन्धवधे मन्त्रो युधिष्ठिरमखागमः ॥ ९० ॥

शिशुपालवधो यज्ञे ॥ ९१ ॥

दुर्य्योधन पराभवः ॥ ९२ ॥

शाल्वस्य युद्धं यदुभिः ॥ ९३ ॥

शाल्वस्य हरिणा वधः ॥ ९४ ॥

दन्तवक्रस्य सुतान्तः ॥ ९५ ॥

काशीति । हरिणेति ज्ञेयं न तु हलिनेति । उत्तरत्र नाम ग्रहणात् ॥ ८६ ॥

रामेणेति । स्पष्टम् ॥ ८७—८८ ॥

हरेरिति । “जरासन्धवधे मन्त्रो युधिष्ठिरमखागमः । जरासन्धवधो भीमादिजयश्चार्ज्जुनादिभिः” (१) ॥ ८९—९० ॥

शिशुवित । हरेरित्येव ॥ ९१ ॥

दुर्य्योधनेति । स्पष्टम् ॥ ९२ ॥

शाल्वस्येति । स्पष्टमस्यार्थः ॥ ९३—९४ ॥

दन्तेति । दन्तवक्रसुतयोर्वध इत्येकस्मिन्नध्याये तत्र दन्त-वक्रस्यान्तः कृष्णाकृतः । सूतस्य सीरिणेति ॥ ९५ ॥

(१) भागवतम् १० । ७२ । १० श्लोकः ।

वल्कलान्तश्च सीरिणा ॥ ९६ ॥
श्रीदामकृष्णसञ्जल्पः ॥ ९७ ॥
श्रीदाम्नः सम्पदद्भुता ॥ ९८ ॥
समुहृत्सङ्गः कुरुक्षेत्रे ॥ ९९ ॥
कृष्णोद्वाहाभिवर्णनम् ॥ १०० ॥
वसुदेवस्य यज्ञाश्च ॥ १०१ ॥
मृतपुत्त्र-प्रदर्शनम् ॥ १०२ ॥
श्रुतदेवस्य चातिथ्यम् ॥ १०३ ॥
अर्ज्जुनेन सुभद्राहरणञ्च ॥ १०४ ॥

वल्वलेति। वल्वलो दैत्यः। सीरीरामः ॥ ९६ ॥

श्रीदामेति। श्रीदामेति नाम मूलेऽप्रयुक्तमपि "श्रीदामरङ्क भक्तार्थंभूम्यानीतेन्द्रवैभव मिति" (१) पद्मपुराणे सहस्र नाम्नि दृष्टेह प्रयुक्तम् ॥ ९७ ॥

श्रीदाम्न इति। स्पष्टम् ॥ ९८ ॥

सुहृदिति। सुहृदो यदु कुरुनन्दादयस्तैः सङ्गः ॥ ९९ ॥

कृष्णेति। रुक्मिण्यादिभिश्चोद्वाहरीतिकथनमित्यर्थः ॥ १०० ॥

वसुदेवस्येति। चकारान्नन्दादिप्रस्थापनञ्च ॥ १०१ ॥

मृतेति। मृतपुत्राणां देवक्याः प्रदर्शनमिति निजन्तम् ॥१०२॥

श्रुतदेवस्येति। चकाराज्जनकस्य चातिथ्यम् ॥ १०३ ॥

अर्ज्जुनेनेति। स्पष्टम् ॥ १०४ ॥

---

(१) भागवत १०।१५।७० श्लोक। एवं पद्मपुराणे श्रीविष्णो सहस्रनाम्नि।

वेदस्तुतिनिरूपणम् ॥ १०५ ॥

देवत्नयविभागश्च ॥ १०६ ॥

द्विजपुत्त्राहृतिस्तथा ॥ १०७ ॥

कृष्णाकीर्त्त्युपसंहारः ॥ १०८ ॥

इतीदं द्वारकाकृतम् ॥ १०९ ॥

इति श्रीहरिलीलायां वोपदेवकृतौ दशम-
स्कन्धविवरणम् ॥

---

वेदस्तुतीति । स्पष्टम् ॥ १०५ ॥

देवत्नयेति । सात्त्विकादिभिर्गुणैः ॥ १०६ ॥

द्विजपुत्रेति । स्पष्टम् ॥ १०७ ॥

कृष्णकीर्त्तीति । स्पष्टम् ॥ १०८ ॥

इतीति । स्पष्टम् ॥ १०९ ॥ ( १० )

इति वोपदेवविरचित-हरिलीलाया मधुसूदनसरस्वती-
प्रणीतं दशमस्कन्धविवरणम् ॥

इति दशमोऽध्यायः ॥ १० ॥

---

*

मुक्तिरेकादशस्कन्धेऽध्यायैकत्रिंशतोदिता ॥ १ ॥

तत्र कर्म्मज्ञाननिष्ठा भेदात् प्रकरणद्वयम् ॥ २ ॥

पञ्चाध्यायास्तयोराद्यम् ॥ ३ ॥

तत्राद्ये युगपत्क्षयः ॥ ४ ॥

विष्णुगुप्ते यदुकुले विप्रशापाद् विरक्तये ॥ ५ ॥

एवं दशमार्थमुक्त्वा क्रमप्राप्तमेकादशार्थमाह। मुक्तिरिति। अध्यायानामेकत्रिंशदध्यायैकत्रिंशत्तयामुक्तिलक्षणन्तु। "मुक्तिरात्यन्तिक" (१) इत्यत्रोक्तमिति नेहोक्तम् ॥ १ ॥

अत्र प्रकरणविभागमाह। तत्रेति। मुक्तौ हि कर्म्मज्ञाने साधने तत्रान्तःकरणशुद्धिद्वाराकर्म्मणामारादुपकारकत्वम् "कषायपक्तिः कर्म्माणि ज्ञानञ्च परमागतिः"। इत्युक्तत्वाज्ज्ञानन्तु साक्षात्। "ज्ञानादेव हि कैवल्यं प्राप्यते येन मुच्यत" इत्युक्तत्वात् ॥ २ ॥

तत्र कर्म्मनिष्ठाप्रकरणार्थं विवक्तुमाह। पञ्चेति। स्पष्टमस्यार्थः ॥ ३ ॥

प्रथमाध्यायार्थमाह। तत्रेति। तत्राद्येऽध्याये यदूनामपि कुले कृष्णगुप्तेऽपि विप्रशापाद् युगपत्क्षयः। स त्वन्येषां वैराग्यार्थम्। को नाम हि महाबलानां भगवत्पालितानामपि यदूनां कुलं शापमात्रादेव क्षणेन क्षीणमवेक्ष्य संसृतो न विरज्येत। शापेन कुलस्य युगपद् व्याप्तत्वात् क्षययौगपद्यम्। क्रमेण क्षयस्तु विंशे ॥ ४—५ ॥

---

(१) भागवते ११ स्कन्धे।

द्वौ चतुष्टयमेको द्वौ प्रश्नाः शेषेषु सोत्तराः ॥ ६ ॥

ज्ञातुं भागवतान् धर्म्मान् पुंसो माया तदत्ययम् ।
ब्रह्मकर्म्मावतारालिमभक्ताप्तिं युगस्थितिम् ।
नव प्रश्नान् निमिश्चक्रे तानाचख्युर्नवार्षभाः ॥७—८॥

सर्व्वकर्म्मार्पणं विष्णौ ॥ १० ॥

रागद्वेषविवर्ज्जितः ॥ ११ ॥

मिथ्यार्थ-दर्शनासक्तिः ॥ १२ ॥

एवं प्रथमाध्यायार्थमुक्त्वा शेषाध्यायचतुष्टयार्थं संगृह्णन्ति । द्वाविति । द्वौ सोत्तरौ प्रश्नौ द्वितीये । चत्वारस्तृतीये । एकश्चतुर्थे द्वौ पञ्चमे । शेषेषु चतुर्षु । एवं नव प्रश्नाः उत्तराणि च स्युः ॥६॥

तानेवाह । ज्ञातुमित्यादि । अत्र ज्ञातुमिति नवभिर्द्वितीयान्तः सम्बध्यते । 'निमिश्चक्रे' इत्यनेन सहान्वयः । भागवतान् पुंसः पुरुषान् । तदत्ययं तस्या मायाया अत्ययं विनाशहेतुम् । अवतारालिम् अवताराणामालिंमालाम् । अभक्ताप्तिं अभक्ताः । किं फलं प्राप्नोति । युगधर्म्मः । आचख्युः सोत्तरांश्चक्रुः आर्षभाः ऋषभपुत्राः । स्पष्टमन्यत् ॥ ७—८ ॥

अथ क्रमात् पादैस्तदुत्तराण्याह । सर्व्वेति । सर्व्वकर्म्मार्पणं विष्णौ भागवतो धर्म्मः ॥ १० ॥

रागेति । भागवतः पुमान् ॥ ११ ॥

मिथ्येति । मिथ्याभूतस्यार्थस्य दर्शने आसक्तिर्या सामायेत्यर्थः (१) ॥ १२ ॥

---

(१) सैवाविद्या, तद् यथा योगसूत्रे "अनित्याशुचि दुःखानात्मसु नित्य-

विपर्य्ययविमर्शनम् ॥ १३ ॥

सर्व्वत्रानुगतंशुद्धम् ॥ १४ ॥

वेदतन्त्राच्युतार्च्चनम् ॥ १५ ॥

पुरुषादि-वपुर्लीला ॥ १६ ॥

कालचक्रपरिभ्रमः ॥ १७ ॥

ध्यानयोगार्च्चनं स्तोत्रम् ॥ १८ ॥

उत्तराणि नवाङ्घ्रिभिः ॥ १९ ॥

धर्म्मे भागवतेऽभ्यासः पुंभिर्भागवतैः सह ।
जितमायस्य धामस्वमारोढुं भूमिकोत्तरा ॥२०—२१॥

विपर्य्ययेति । दृश्यजातमसत् । आत्मा तु सन्निति विपर्य्ययः । तस्य विमर्शनं युक्त्या स्थिरीकरणम् । स मायाया अत्ययः ॥ १३ ॥

सर्व्वेति । सर्व्वत्रजाग्रदाद्यवस्थासु अनुस्यूतम् । कर्त्तृत्वाद्य पृष्ट ब्रह्म ॥ १४ ॥

वेदेति । वेदश्च तन्त्रश्च पाञ्चरात्रम् । तन्मात्रेणाच्युतस्यार्च्चनं कर्म्म ॥ १५ ॥

पुरुषेति । अवतारालिः ॥ १६ ॥

कालेति । अभक्तस्य फलम् ॥ १७ ॥

ध्यानेति । क्रमात् कृतादिषु चतुर्ष्विति युगधर्म्मस्थितिः ॥१८॥

उत्तराणीति । स्पष्टमस्यार्थः ॥ १९ ॥

धर्म्मेति । ननु किमित्यनेन नवैव प्रश्नाः । किमिति चामीषा-

शुचिसुखात्म ख्यातिरविद्या । अनित्ये ध्रुवाचन्द्रतारकाद्यौ । इति नित्यबुद्धि । अशुचौकाये शुचिज्ञानम् इत्यादि ।

माया जयोऽधरा भक्तिर्ज्ञानकर्म्मसमुच्चयात् ॥ २२ ॥
अवतारकथा ततः ॥ २३ ॥
कामत्यागेशकीर्त्तनम् ॥ २४ ॥

मध्यायचतुष्टयेनैवाभिधानमिति। तत्र भूमिका चतुष्टयेन परिहरति। धर्म्म इति। एषा पुरुषस्य स्वधाम आरोढुं उत्तराद्युत्तमा भूमिका। यत्पूर्व्वभूमिकाभ्यासबलाज्जितमायस्य सतो भागवतैः पुरुषैः सह भागवते धर्म्मेऽभ्यासः। अस्याश्च मोक्षेति सन्निकृष्टत्वात् अत्युत्तमत्वम्। यस्माद्भ्रष्टः संसारे पतितः। तत् स्वधाम। तदस्यामाद्यस्य प्रश्नद्वयस्योपयोग इत्युक्तं स्यात्। उत्तमामाह ॥ २०—२१ ॥

मायेति। इयमधरा यद्भक्त्यादिसमुच्चयान्मायाजयः। समुच्चयश्चैषां फलोत्पत्तौ परस्परसाहित्यम्। अधरत्वं तूक्तापेक्षया। अस्यां मायादिप्रश्नचतुष्टयस्योपयोगः। मायाजय इत्यनेन मायाप्रश्नः। माया हि जयाय पृष्टा भक्तिग्रहणेन तदत्ययप्रश्नः। भक्तिर्हि तज्जये हेतुः। "इति भागवतान् धर्म्मान् शिक्षन् भक्त्या तदुत्थया। नारायणपरो मायामञ्जस्तरति दुस्तराम्" (१)। इत्युक्तत्वात् ज्ञानं ब्रह्म। कर्म्म कर्म्मैव ॥ २२ ॥

मध्यमभूमिकामाह। अवतारकथेति। इत्युत्तमभूमिसकाशादधरा मध्यमेत्यर्थः ॥ २३ ॥

अस्यां सप्तमप्रश्न इत्याह। हीनामाह। कामेति। काम्यत्यागश्च ईशकीर्त्तनञ्चेति द्वन्द्वैक्यम् ॥ २४ ॥

---

(१) भागवतम् ११। ३। ३३ श्लोकः।

इति भूमिश्चतस्त्भिरध्यायानां चतुष्टयम् ॥ २५ ॥
वसुदेवाय जायन्तेयोपाख्यानमिदं जगौ ।
मुमुक्षवे द्वारवत्यां नारदस्तद्गृहागतः ॥ २६ ॥
विष्णोरभ्यर्थना देवैः स्वर्वसेत्युद्धवेन च ॥ २७ ॥
स्वधामनयमेत्युक्ते षष्ठे संवादकारणम् ॥ २८ ॥

इतीति। अस्या मध्यमभूमिसकाशादपराहीनेत्यर्थः। अस्यामष्टमनवमोपयोगः। काम्यत्याग इत्यनेन ह्यभक्ताभिप्रश्नः। पञ्चमेऽध्याये काम्य कर्म्मणो हेयत्वेनाभिधानात्तत्त्यागः। ध्यानयोगार्च्चनानां मुक्तेष्ववान्तर्भावं मत्वा प्राधान्यादीशकीर्त्तनमिति स्तोत्रमात्रं गृहीतम् एवमध्यायचतुष्के भूमिका भेदान् नव प्रश्नसमावेश इत्याह ॥ २५ ॥

ननु कुतः पुनरिदञ्च कर्म्मनिष्ठा प्रकरणमित्याह। वसुदेवेति। "त्वमप्येतान्महाभाग! धर्म्मान् भागवतान् श्रुतान्। आस्थित. श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥" इत्युक्तत्वात् अस्य कर्म्मनिष्ठात्वमिति भावः। जायन्तेया जयन्तीपुत्रा नवयोगिनः ॥ २६ ॥

अध्याये पञ्चमार्थमुक्त्वा ज्ञानप्रकरणं वक्तुं षष्ठाध्यायार्थमाह। विष्णोरिति ॥ २७ ॥

स्वधामेति। संवादः कृष्णोद्धवयोस्तस्य कारणं षष्ठ उचे ऋषिः। कर्त्तरि लकारः। यतो देवैर्विष्णोरभ्यर्थनाकृता। स्वः स्वर्गे वसत्वमिति। उद्धवेन च कृत्वा स्वधाम स्वस्थानं नय मामिति। अतः स्थानमधितिष्ठासुना भगवता यदुद्धवस्य लोकहितार्थमिहावस्थानमिच्छता तत्त्वोपदेशः कृतः। स तयोः सम्वाद-

चतुर्द्धा त्रीनथैकं द्वौ द्वावेकं चैककं द्विधा।
द्वौ द्विधा त्रींश्चतुर्द्वैकमेकमेकश्च सोत्तरान्।
प्रश्नान् शेषेषु हित्वान्त्यो ममाहं लयदर्शनौ ॥ २८ ॥
सङ्गत्याग उपायस्य ॥ ३० ॥

हेतुरित्यर्थः। एतेर्नान्यैरप्याचार्य्यमुखादेव ज्ञातव्यमिति गम्यते। तथाहि लब्धं सम्यक् स्यात्। "आचार्य्यवान् पुरुषो वेदेति" (१) श्रुतिः ॥ २८ ॥

एवं कर्म्मनिष्ठाप्रकरणार्थं सम्वादकारणञ्च विविच्य ज्ञाननिष्ठा-प्रकरणार्थसम्वादं वक्तुं शेषाध्यायार्थं संगृह्णाति। चतुर्द्धेति। अन्त्यौ त्रिंशैकत्रिंशौ त्यक्त्वाशेषेषु त्रयोविंशतिसंख्येषु एतान् सोत्तरान् प्रश्नान् ऋषिरुच इत्यन्वयः। तत्र चैकः प्रश्नः। तदुत्तर-ञ्चैकं तच्चतुर्द्धोक्तं भगवता चतुर्ष्वध्यायेषु एवमुत्तरत्र त्रिषु वा प्रत्ययान्तेषु त्रीन् प्रश्नान् सोत्तरान् पञ्च ऊचे। एवं षष्ठे। एवमुत्तरत्र नवसुसंख्या शब्देषु ततश्च द्वाविंशतिप्रश्ना उत्तराणि च। अध्यायास्तु त्रयोविंशतिः स्युः। उत्तरभेदादिर्विवरिष्यते। ममे-त्यादिनान्त्ययोरर्थः। ममाहं योर्लयः। ममाहं लयस्त्वं दर्शय इति ममाहम्। लयदर्शनावन्त्यौ तत्र त्रिंशे ममत्वलयः। स च स्वयं ज्ञातिक्षयं पश्यतोऽपि हरेस्तदुपेक्षया गम्यते। एकत्रिंशे त्वहं लयः स तु भगवतो देहत्यागादुगम्यते। एतौ च ज्ञानोत्पत्तेर्लिङ्गभूता-विति ज्ञाननिष्ठान्तदर्शितौ। अथ तान् द्वाविंशतिप्रश्नानाह ॥२८॥

सङ्गत्यागेति। सङ्गत्याग उपायस्येत्यादिपञ्चभिः। अत्र

(१) छान्दोग्यम् ६।१४।२।

सत्सङ्गासङ्गयोः ॥ ३१ ॥

सताम्। ( साधूनाम् ) ॥ ३२ ॥

भक्तेर्जीवस्य विषयासक्तौ दृष्टेऽपि दूषणे (१) ॥

हेतोः ॥ ३३ ॥

हंस सनन्दादिसंवादस्योत्तमस्य च ॥ ३४ ॥

श्रेयःसु ॥ ३५ ॥

ध्यानयोगस्य सिद्धीनां च ॥ ३६ ॥

विभूतिवत् ॥ ३७ ॥

द्वाविंशतिः षष्ठ्यन्तानां सम्बुभुत्सया उद्धवप्रश्नान् द्वाविंशतिं चक्रे इत्यनेनान्वयः वतिरपि षष्ठ्यर्थे एवेति न तदन्तयोः षष्ठ्यन्तत्वहानिः। सङ्गत्यागे उपायस्य बुभुत्सयोद्धवः प्रश्नं चक्रे। एवमन्येषु ॥ ३० ॥

सदिति। सत एकरूपस्यात्मनः सङ्गासङ्गयोर्बन्धमोक्षयोः ॥३१॥

सतामिति। साधूनाम् (२) भक्त इत्यादि ॥ ३२ ॥

भक्तेरिति। दोषदर्शनेऽपि जनानां विषयासक्तौ हेतोः ॥३३॥

(६) हंस इति। स्पष्टम् ॥ ३४ ॥

श्रेय इति। सत्कर्ममध्ये उत्तमस्य ॥ ३५ ॥

(८) ध्यानेति। सिद्धीनामिति। (९) सिद्धयोऽणिमादयः (१०) ॥ ३६ ॥

विभूतीति। यथा विभूतीनाम् अपि बुभूत्सया प्रश्न चक्र इति वतेरर्थः (११) ॥ ३७ ॥

---

(१) भागवतम् ११।५।४-५ श्लोकः।

वर्णाश्रमादिधर्म्मस्य ॥ ३८ ॥

ज्ञानादीनाम् ॥ ३९ ॥

यमादिवत् ॥ ४० ॥

गुणदोषापवादस्य ॥ ४१ ॥

तत्त्वसंख्याव्यवस्थितेः ॥ ४२ ॥

क्षेत्रक्षेत्रज्ञभेदस्य ॥ ४३ ॥

देहयोगवियोगयोः ॥ ४४ ॥

अभिमान-निवृत्तेश्च ॥ ४५ ॥

क्रियायोगस्य ॥ ४६ ॥

वर्णेति । आदिशब्दात् साधारणधर्म्मस्य च (१२) ॥ ३८ ॥

ज्ञानेति । आदिशब्दार्थज्ञानवैराग्यैश्वर्य्यादीनाम् (१३) ॥३९॥

यमेति । वतिः प्राग्वत् ॥ ४० ॥

आदिशब्दान्नियमादीनाम् त्रयस्त्रिंशत्संख्यकानाम् (१४) । गुणेति । गुणदोषापवादस्येति द्वन्द्वैक्यम् । अपवादश्च तयोर्गुण-दोषयोरेव । न चैव द्वैविध्यं पृथक् प्रयत्नाभावात् ॥ ४१ ॥

तत्त्वेति । व्यवस्थितिर्निश्चयः (१६) ॥ ४२ ॥

क्षेत्रेति । क्षेत्रं प्रकृतिः । क्षेत्रज्ञः पुरुषः तयोर्भेदो विशेषः (१७) ॥ ४३ ॥

देहेति (१८) । स्पष्टम् ॥ ४४ ॥

अभीति । स्पष्टमस्यार्थः (१९) ॥ ४५ ॥

क्रियेति । क्रिया कर्म्म (२०) ॥ ४६ ॥

संसृतेरधिष्ठानस्य ॥ ४७ ॥

भक्तेश्च परस्याः ॥ ४८ ॥

सम्भुत्मया ॥ ४९ ॥

प्रश्नान् द्वाविंशतिश्चक्रे कृष्णम्प्रत्युद्धवः क्रमात् ॥ ५० ॥

हेयोपादेयनिर्द्धारः ॥ ५१ ॥

स्वाप्ने सुप्तप्रबुद्धवत् ॥ ५२ ॥

संसृतेरिति। (अधिष्ठानस्य) अविद्यमानस्य संसारस्याधिष्ठातुः (२१) ॥ ४७ ॥

भक्तेरिति। परस्याः सर्व्वविलक्षणाया उत्कृष्टाया इत्यर्थः। भक्तिसाधनस्य प्रागेव पृष्टत्वात् पौनरुक्तिः माभूदिति परविशेषणम् (२२) ॥ ४८ ॥

समिति। स्पष्टार्थम् ॥ ४९ ॥

प्रश्नानित्यादि। सुगममेतत् ॥ ५० ॥

अर्थक्रमात्पादैस्तदुत्तराण्याह। हेयोपादेयेति। सङ्गत्यागे उपाय इत्यर्थः ॥ ५१ ॥

(१) स्वाप्न इति। यथा स्वप्ने दृष्टेऽर्थे सुप्तप्रतिबुद्धौ सक्तासक्तौ। एवमात्मनः सङ्गासङ्गावित्यर्थः। यथाहि स्वप्नादुत्थितः स्वप्नमध्यवर्त्तिनमात्मानं स्मरन्नपि न तन्मध्यवर्त्तिनं मन्यते। यथा च स्वप्नदृष्टस्य मिथ्यात्वादतन्मध्यवर्त्त्यपि स्वप्नदृष्टभ्रमात्तन्मध्यवर्त्ती भवति। एवं वाधितानुवृत्त्या विद्वान् देहस्थोऽपि न सम्बन्धं मन्यते मूढ़स्तु तत्त्वतो मुक्तोऽपि भ्रमात् स्वबन्धं मन्यते। तदुक्तं "देहस्थोऽपि

(१) "वैधर्म्याच्च न स्वप्नादिवत्" वेदाः दः २।२।२९ सू।

वेदान्त सिद्धान्तलेश. (स्वाप्निकतत्त्वविचार) २। ७ श्रः।

मिथ: कृष्णकथासक्ता: ॥ ५३ ॥

प्रेम्णैव हरिदासता ॥ ५४ ॥

स्वसृष्टानुप्रविष्टोऽसौ ॥ ५५ ॥

रज: सम्मिश्रसात्वता ॥ ५६ ॥

गुणचित्तोभयत्याग: ॥ ५७ ॥

भक्तिरव्यभिचारत: ॥ ५८ ॥

न देहस्थो विद्वान् स्वप्नाद् यथोत्थित । अदेहस्थोऽपि देहस्थ: कुमति: स्वप्नदृग् यथा ॥" तथा "न निरोधो न चोत्पत्तिर्न बद्धो न च साधक । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति ॥ ५२ ॥

मिथ इति । स्पष्टार्थम ॥ ५३ ॥

सन्त: प्रेम्णेति। हरिदासता भक्ति: प्रेम्णैव न तु लिप्सादिना ॥ ५४ ॥

स्वसृष्टेति । स्वसृष्टेष्वणुप्रविष्टोऽसावीश्वर एव इत्यर्थ: ॥ ५५ ॥

रज इति । रजसा सम्मिश्रम् सत्त्वं यस्य स तथा तद्भाव: । सदोषदर्शनेऽपि विषयासक्तौ हेतु: सम्मिश्रमिति सशब्देन रजस: प्राधान्यम् । तेन सत्त्वांशेन दोषं पश्यति । रज: प्राबल्याच्च तं तिरस्कृत्य विषयेषु प्रवर्त्तत इत्यर्थ: ॥ ५६ ॥

गुणेति । गुणाश्चित्तञ्च इत्युभयस्यैव त्याग:, हंस सनन्दनादि-संवादत्वं गुणा विषया: । चित्तस्य त्यागो निग्रह: ॥ ५७ ॥

भक्तिरिति । तत्कर्ममध्ये उत्तमाऽव्यभिचारिणी भक्ति-रित्यर्थ: ॥ ५८ ॥

अरूपचिन्तनं रूपैः ॥ ५९ ॥

ध्यातुर्ध्येयसमानता ॥ ६० ॥

तत्र तत्रोत्कटं सत्त्वम् ॥ ६१ ॥

कर्म्मत्यागः शनैः शनैः ॥ ६२ ॥

द्वे हेये द्वे उपादेये ॥ ६३ ॥

अरूपेति। अरूपवस्तुनो रूपैरुपायभूतैश्चिन्तनं ध्यानं ध्यानयोगः ॥ ५९ ॥

ध्यातुरिति। ध्येयेन वस्तुना सह ध्यातुस्तुल्यत्वं सिद्धिः। तथाहि भूतसूक्ष्मध्यानादणिमा स्यात् (१) महत्तत्त्वध्यानान्महिमेति दिक् (२) ॥ ६० ॥

तत्रेति। तेषु तेष्विन्द्रियादिषु यत्र यत्र सत्त्वाधिक्य सा विभूतिः ॥ ६१ ॥

कर्मेति। वर्णाश्रमादिधर्म्मः ॥ ६२ ॥

द्वे हेये इत्यादि। ज्ञानादिषु यमादिषु च उभयत्र द्वे हेये द्वे उपादेये। तथाहि, ज्ञानादिषु तावत्। "धर्म्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम्। गुणेष्वसङ्गो वैराग्यमैश्वर्य्यञ्चाणिमादयः" (३) इति। एवंविधा ज्ञानादय उपादेयाः। अन्यथा तु हेयाः। यमादिषु च "शमो मन्निष्ठताबुद्धेर्दम इन्द्रियनिग्रहः।

(१) भूतसूक्ष्म ( अपञ्चीकृत पञ्चमहाभूतेभ्यः, पञ्चतन्मात्रेभ्यो वा ) अणिमा प्राथमिकी सिद्धिः। भागवतम् ११ । १५ । १० श्लोक ।

(२) महत्तत्त्वं बुद्धितत्त्वम्, तद्ध्यानादाराधनान्महिमा-द्वितीया सिद्धिर्भवति। भागवतम् ११ । १५ । ११ श्लोकः ।

(३) भागवतम् ११ । १९ । २७ श्लोक ।

गुणदोषावभिज्ञिदौ ॥ ६४ ॥

कर्म्मणि ज्ञानभक्त्योर्न ॥ ६५ ॥

तितिक्षाद् खसम्मर्षो जिह्वोपस्थजयो धृतिः" (१) इति। एवंविधा यमादय उपादेयाः, अन्यथा तु हेयाः। एवमन्येषु चोत्तरद्वयार्थं एकेनैव पादेन संगृहीतः। उत्तरत्र त्वेकस्यैवोत्तरार्थः। पाद-द्वयेनेति न द्वाविंशतितत्त्वहानिः ॥ ६३ ॥

गुणेति। अयं गुणः अय दोष इति भेदज्ञाने दोष इति। एतद्विभागराहित्येन यदभेदेन ज्ञान स गुणः। "गुणदोषो दृशि-र्दोषो गुणस्तूभयवर्ज्जित" (२) इत्युक्तत्वात् ॥ ६४ ॥

गुणदोषयोरपवादकमाह। कर्म्मणीति। तौ गुणदोषौ कर्म्मणिस्तः। न तु ज्ञानभक्त्योस्तत्र भगवदर्पितं कर्म्म गुणः। ततो हि सर्व्वस्य ब्रह्मभावादभिन्नत्वम्। यथोक्तम् "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्म-समाधिना" (३) इति। अन्यस्मिन् कर्म्मणि भेदरूपत्वाद्दोषः। ज्ञानमपरोक्षबोधः। भक्तिरिहोत्तमा। "सर्व्वभूतेषु यः पश्येद् भगवद्भावमात्मनः। भूतानि भगवत्यात्मन्येषो भागवतोत्तम" (४) इत्यत्रोक्ता। अनयोस्तु प्रत्येकमेकात्मा रूपत्वेन भेदाभावान्न ताव-द्दोषः। अतएव भेदप्रतियोगिकाभेदाभावान्न गुणोऽपि। अत एवोक्तं मूलश्लोकेन "न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः।

(१) भागवतम् ११। १९। ३६ श्लोक।

(२) भागवतम् ११। १९। ४५ श्लोक।

(३) गीता ४। २४ श्लोक।

(४) भागवतम् ११। २। ४५ श्लोक।

सा सा संख्या प्रकल्पनात् ॥ ६६ ॥
स्वत:सिद्धः पुमान्नान्यत् ॥ ६७ ॥
मनोगता(ता)ऽभिमान्यज: ॥ ६८ ॥
मनः शत्रुजय: सम्यक् ॥ ६९ ॥

साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्" (१) इति। ज्ञानिनामित्यर्थ: ॥ ६५ ॥

सेति। सा सा तेषु तेषु मतेषु प्रसिद्धा। षड्विंशति पञ्चविंशतिप्रमुखातत्त्वसंख्याप्रकल्पनाद् वादिनां स्फूर्त्तिवैचित्र्यात्। वस्तुतस्त्वेकमेव तत्त्वमिति भाव: ॥ ६६ ॥

स्वत इति। पुमान् क्षेत्रज्ञ: स्वत: सिद्धः स्वप्रकाश:। अन्यत्क्षेत्रम् न स्वत: सिद्धम्। तद्धि जड़त्वादन्यत: प्रकाशते। "परस्परं सिध्यति य: स्वत: खे" (२) इत्युक्तम्। अयं क्षेत्रक्षेत्रज्ञयोर्भेद इत्यर्थ: ॥ ६७ ॥

मन इति। मन: प्रतिगच्छतीति मनोगन्ता मनसि स्थित इत्यर्थ:। तस्मिन् मन: कल्पितेऽर्थेऽभिमानी। अजो देहयोगवियोगहेतुः। वस्तुत: स्वयमज्ञोऽपि मनोधर्मेष्वभिमानाज्जन्ममृत्युमानित्येवेत्यर्थ: ॥ ६८ ॥

मन इति। मन एव शत्रुस्तस्य जयो निग्रह:। सोऽभिमाननिवृत्तौ हेतु: ॥ ६९ ॥

(१) भागवतम ११। २०। ३६ श्लोक।
(२) भागवतम ११। २२। ३१ श्लोक।

प्रतिमादिष्वजार्च्चनम् ॥ ७० ॥

पुमान् प्रकृत्योपगूढ़ः ॥ ७१ ॥

विश्वमूर्त्तीशपूजनम् ॥ ७२ ॥

पादैर्द्वाविंशतिर्विष्णोरुत्तराण्युद्धवं प्रति ॥ ७३ ॥

गुरुभिः पञ्चविंशत्या लोकतत्त्वपरीक्षणे ॥ ७४ ॥

हीनमध्यमोत्तमैरष्टनवाष्टाभिस्त्रिधैकधा ॥ ७५ ॥

आत्मतत्त्वपरीक्षायाश्चतुर्द्धेत्याद्यमुत्तरम् ॥ ७६ ॥

ऋणयान्तृण्याश्रमद्वन्द्वभेदेन द्वादशं द्विधा ॥ ७७ ॥

प्रतिमेति । आदिशब्दात्सलिलसूर्य्याग्निमन्त्रविप्राः । तेष्वजस्य विष्णोरर्च्चनं क्रियायोगः ॥ ७० ॥

पुमानिति । प्रकृतिकामिन्यालिङ्गितः पुमान् संसृतावधिष्ठानम् ॥ ७१ ॥

विश्वमूर्त्तिरिति । स्थिरचरमूर्त्तेरीश्वरस्य पूजनं पराभक्तिरित्येवम् । पादैरिति स्पष्टम् ॥ ७२—७३ ॥

एवं सोत्तरान् प्रश्नानुक्त्वा इदानीं चतुर्णां ध्यातॄणां प्रभेदानाह । गुरुभिरिति । स्पष्टार्थम् ॥ ७४ ॥

हीनेति । ( आत्मतत्त्वपरीक्षाया चतुर्द्धेत्याद्यमुत्तरम् ) । आत्मेत्यादि । गुरुभिरित्यादि मार्द्धेनोत्तरम् । आद्यमुत्तम चतुर्द्धा तत्र विंशत्या गुरुभिस्त्रिधा । ते हि लोकतत्त्वपरीक्षायां हीन मध्यमोत्तमत्वात्त्रिधा । अतएव सप्तमाष्टमनवमेष्वष्टनवाष्टभिः क्रमादुक्ताः । आत्मतत्त्वपरीक्षायामेकधा । सा चोक्ता दशमे । इत्थं हेयोपादेयनिर्द्धारेत्युत्तरं चतुर्द्धा ॥ ७५—७६ ॥

ऋणयेति । द्वादशमुत्तरं कर्म्मत्यागः "शनैः शनैः" इत्य

व्यवस्थेति तथा वेदोऽपीति पञ्चदशं द्विधा ॥ ७८ ॥
भिक्षुगीतस्य सांख्यस्य गुणलक्ष्मैलगीतयोः।
उक्त्योक्तं मनसोऽरित्वं बलं भेदो रणे जयः ॥ ७९ ॥

वोक्तम् (१)। तच्च ऋण्यानृणिनोराश्रमयोर्द्वन्द्वभेदाद्विधा। तत्र ऋणिनौ ब्रह्मचारिगृहस्थौ। आदौ ऋषीणामृणं यदपाक्रियतेऽध्ययनात्। द्वितीये देवानां पितृणाञ्च यदपाक्रियते यागे। प्रजया चानृणिनौ यति वनस्थौ (२)। अतएव तदुत्तरं समाष्टादश्योरुक्तम् ॥ ७७ ॥

व्यवस्थेति। पञ्चदशं गुणदोषावभिद्भिदाविति। तस्य च गुणदोषौ कर्म्मण्येव न ज्ञानभक्त्योरिति व्यवस्थायामेकः प्रकारः। यथा चेयमस्माभिरुक्ता व्यवस्था। तथा वेदोऽप्येवं ब्रूत इति द्वितीयः। ततस्तद् विंशैकविंशयोरुक्तम् ॥ ७८ ॥

भिक्षुगीतेति। स्पष्टम्। जनविंशेति। मनः शत्रुजयः। सम्यगिति चतुर्द्धा तद् मनसोऽरित्वादिभेदात्। तत्र भिक्षुगीतस्योक्त्या मनसोऽरित्वमुक्तम् (३)। भिक्षूणां मन एव शत्रुरिति समर्थितम्। सांख्योक्त्या तद्बलं तत्र हि (४) महदादिप्रपञ्चजालयुक्तम्। तच्च मनःशत्रोः पराभूतौ सहायभूतत्वाद्बलमित्युक्तम्।

(१) भागवतम् ११। ९। १२ स्लोकः।
(२) "जायमानोवै ब्राह्मणस्त्रिभि· ऋणवानजायत।"
"ऋणानि त्रीनपाकृत्य मनो मोक्षे निवेशयेत् ॥" इति मानव शास्त्रम्।
"पुत्रेणाय लोकोजय्य." "विद्यया देवलोक." "कर्म्मणा पितृकस्य"
इति। वृह दा १। ५। १६।
(३) भागवतम् ११। २३।
(४) साख्यदर्शनम. (कारिका) ११ वा सूत्रम्, २२।

ऊनविंशचतुर्द्धैव चतुर्भिर्द्वादशोत्तरैः ॥ ८० ॥
पञ्चद्वादशभिः षड्‌भिः षट् त्रयोविंशतिस्ततः ॥८१॥
निःसङ्गत्वे गुणत्यागे भक्तिर्दार्ढ्येऽपकर्म्मणि ॥ ८२ ॥

मनः सम्बन्धित्वं चास्य तत्कल्पनाविजृम्भितत्वात् तत्त्वज्ञानार्थम् । तत्त्वज्ञानपूर्व्वकम् । हि शत्रोरभिजयेन इस्तस्थितो विजयः । गुणलक्षोत्त्या तु भेदः । उपजयः । सत्वहत्त्या हत्यन्तराणां वशीकारे स्रथमूलो मनः शत्रुः शक्यो जेतुम् । एवं जय-सामग्रीं समग्रामुक्त्वा ऐलगीतोक्त्या तस्याः फलमुक्तम् । ऐलः पुरूरवाः । स हि विचारशरैः मनः प्रत्यर्थिनं निर्ज्जित्य सुख-मासीत् । "वैतसेनस्ततोऽप्येवमुर्व्वश्या लोकनिस्पृहः । मुक्तसङ्गो महीमेतामात्मारामश्चचारह" (१) इत्युक्तत्वात् । एवमेविदमन्यथेद-माख्यानचतुष्टयमप्रशस्तं स्यात् । तदितराचार्य्येण चतुरचेतसो-क्तम् । उक्तयोक्तमित्यादि । तत्र भेदचतुष्टयं त्रयोविंशादिषु चतुर्ष्वूक्तम् ॥ ७९ ॥

एवमुक्तरीत्या चतुर्भिरावान्तैः ( रुत्तरैः ) द्वादशाध्यायाः ॥८०॥

पञ्चेति । षड्‌भि षड्‌िति । द्वादशभिरुत्तरैः पञ्चाध्यायाः । निःसङ्गेति । एवं पूर्व्वोक्तैर्द्वादशभिस्त्रयोविंशतिरध्यायाः स्युः । ननु त्रयोविंशत्यध्यायेषु प्रत्येकमेकैक एव प्रश्न इत्येव किमस्मन्न क्ततम् । किं वैषम्येनेति तत्राह ॥ ८१ ॥

निःसङ्गत्वेति । निःसङ्गत्वे उपयोगाश्रयाणां सत्सङ्गासङ्ग-साधुभक्तित्रिप्रश्नानामिकत्रमेलनं क्ततम् । गुणत्यागे उपयोगाद्द्वयो-र्विषयासक्तिहेतुहंससनन्दादिसंवादप्रश्नयोर्भक्तिदार्ढ्ये उपयोगात् ।

---

(१) भागवतम ११ । २६ । २५ श्लोक ।

तत्त्वज्ञाने चोपयोगात्त्रिद्विद्विचिमेलनम् ॥ ८३ ॥

तद्धेतुष्वपि निष्कम्पः ॥ ८४ ॥

निःसङ्गः ॥ ८५ ॥

अच्छेदलेपकः ॥ ८६ ॥

विशोधकोऽद्भिः ॥ ८७ ॥

द्वयोरुत्तरं ज्ञेयो ध्यानयोगप्रश्नयोः। अपकर्म्मणि नैष्कर्म्म्य उपयोगात्। द्वयोर्ज्ञानादियमादिप्रश्नयोः ॥ ८२ ॥

तत्त्वज्ञाने उपयोगात्। त्रयाणां तत्त्वसंख्यचेतचेतशदेहयोगवियोगप्रश्नानां यथा चैतत् प्रश्नार्थपर्य्यालोचनया ज्ञेयम् ॥ ८३ ॥

एवमुत्तरभेदाद्विविच्य यस्माद् गुरोर्यत् शिक्षितव्यं तदाह। तद्धेतुरिति। अत्र पञ्चविंशतेः प्रथमान्तानां "पुरुषः क्रियते गुरुभिः क्रमात्" इत्यनेन सहान्वयः (१)। तत्र तद्धेतुषु कम्पहेतुषु सत्स्वपि पुरुषो निष्कम्पः। पृथिव्या गुरुणा क्रियते। यथाभूः सा हि "भूतैराक्रम्यमाणापि न कम्पते" ॥ ८४ ॥

निःसङ्ग इति। वायुना, यथा हि वायुः सर्व्वत्रसञ्चरन्नपि न सज्जति तथा योगी विषयान् भुञ्जानोऽपि न सज्जेदित्यर्थः ॥८५॥

अच्छेदेति। अच्छेदलेपकनभसा। यथा नभः स्थिरचरैर्भावैः सङ्गतमपि नो वस्तुतो विच्छिद्यते। यथा च मेघाद्यैर्न स्पृश्यते एवमात्मनि अविच्छेदत्वमलेपकत्वञ्च पश्येदित्यर्थः ॥ ८६ ॥

विशोधक इति। अद्भिर्यथा स्वच्छ-स्निग्ध मधुरत्वैरापः कीर्त्तनोपस्पर्शने क्षणमात्रात् पुनन्ति। तथा मुनिः पुनीयात् (४) ॥ ८७ ॥

(१) भागवतम्। ११। ७ २७ श्लोकः।

मलत्यागी ॥ ८८ ॥

(उ)त्यक्तो विक्रियया ॥ ८९ ॥

अभेदो विवस्वता ॥ ९० ॥

निःस्नेहः ॥ ९१ ॥

एतेऽष्टौ हीनाः ॥ ९२ ॥

दिष्टभुक् ॥ ९३ ॥

क्षोभहीनः ( सिन्धुना ) ॥ ९४ ॥

मलत्यागीति । अग्निना यथा तेजस्वीत्यादिगुणैरग्निः सर्व्वभक्षोऽपि न मलयादत्ते तथा मुनिर्हविष्या हविष्यं भुञ्जानोऽपि ज्ञानबलान् न तैर्दोषैर्युज्यते ॥ ८८ ॥

त्यक्त इति । चन्द्रमसा स हि यथा कलाना ह्रासवृद्ध्यादिभिर्न विक्रियते तथा निषेकादिश्मशानान्तैर्देहसंस्कारैर्मुनिर्न विकुर्व्वीत ॥ ८९ ॥

अभेद इति । विवस्वता अभेदो भेदशून्यः रविणा स यथोपाधिवशाद्भिन्न इव न वस्तुतोभिन्नस्तथात्मेत्यर्थः ॥ ९० ॥

निःस्नेह इति । कपोतेन सहि स्नेहप्रसङ्गान्नष्टः । तथा स्वय न भवेदिति व्यतिरेकेन दृष्टान्तः ॥ ९१ ॥

एतेऽष्टौ हीनाः ॥ ९२ ॥

दिष्टेति । अजगरेण । स यथा दैवलब्धं भुङ्क्ते न तु स्वयं यतते तथा मुनिः स्यादित्यर्थः ॥ ९३ ॥

क्षोभहीन इति । सिन्धुना । स यथा सरिज्जलसङ्गासङ्गोऽपि न क्षुभ्यति तथा कामाना लाभालाभे मुनिः स्यादित्यर्थः ॥ ९४ ॥

रूपप्रलोभितः ( पतङ्गेन ) ॥ ९५ ॥

सारग्राही ( भ्रमरेण ) ॥ ९६ ॥

स्पर्शमूढ़ो ( गजेन ) ॥ ९७ ॥

निर्लोभः ( मधुघ्नेण ) ॥ ९८ ॥

गीतवञ्चितः ॥ ९९ ॥

रसमूढ़ो ॥ १०० ॥

विमुक्ताशः ( पिङ्गलया ) ॥ १०१ ॥

पतङ्गेन। स यथा दीपप्रलोभनान्नश्यति न तथा कामिन्यादि-रूपालोकनान्मुनिर्नश्यति। तस्मात्तथा न स्यात् ॥ ९५ ॥

सारग्राहीति (१) भ्रमरेण स यथा सर्व्वपुष्पेभ्यः सारमादत्ते तथा सर्व्वशास्त्रेभ्यो मुनिराददधीत ॥ ९६ ॥

स्पर्शमूढ़ इति। गजेन, स यथा करिण्यङ्गसङ्गस्पर्शमूढ़ो गजान्तरैर्हन्यते। तथा स्त्रीस्पर्शाज्जारैर्मुनिस्तस्मात्तथा न स्यात् ॥९७॥

निर्लोभ इति। मधुघ्नेति। स यथा मधुलोभात् शरघानिरस्य मधुस्वयमादत्त। तथार्थलुब्धं मामपि कश्चिन्निरस्यतीति विमृश्य मुनिर्निर्लोभो भवेत् ॥ ९८ ॥

गीतेति। हरिणेन। स हि गीतप्रसङ्गान्नष्टो मृतः। तेन मुनिर्गीतं न शृणुयात् ॥ ९९ ॥

रसेति। मत्स्येन स यथा वरिशरसावेशान्नष्टस्तथा रसेषु मुनिर्न मुह्येत् ॥ १०० ॥

---

(१) "बहुशास्त्र गुरूपासनेऽपि साराहानं षटपदवत्"।

"सर्व्वतः सारमादध्यात् पुष्पेभ्य इव षटपदाः" सांख्य द ४। १२ सूत्रम्।

अपरिग्राही ( कुररेण ) ॥ १०२ ॥

अभिमानभुक् ( अर्भकेण ) ॥ १०३ ॥

एकः कुमारीकङ्कणेन ॥ १०४ ॥

एकमनाः शरकारेण ॥ १०५ ॥

विमुक्तेति। पिङ्गलया (१)। सा हि सकलकामुकाशां विमुच्य निर्विण्णाऽभूत्। तथा स्वयं स्यादित्यर्थः। एते नव मध्यमाः ॥ १०१ ॥

अपरिग्राहीति। कुररेण। स हि सामिषः कुररान्तरैर्हन्यमानः आमिषं त्यक्त्वा निर्ममोऽभूत् (२) तेन मुनिर्निरामिषः स्यात् ॥ १०२ ॥

निर्लोभ इत्यत्र सञ्चयनिषेधोऽत्र तु सञ्चितत्याग इत्यपौनरुक्त्यम्। अभिमानेति। अर्भकेन स यथा मानाभावात् सुखी तथा मुनिः स्यात् ॥ १०३ ॥

एक इति। कुमारी-कङ्कणेन (३)। तद्धि यथा वलयान्तरसङ्गाद् वाचालमित्येकमेवावशेषितं निश्चलमासीत्। तथा कालवार्त्तादिदोषाद् अन्यसङ्गं हित्वा स्वयमेकाकी स्यात् ॥ १०४ ॥

एकमना इति। शरकारेण स हि यथा नाराचवद्धदृष्टिः स सैन्यमपि राजानं गच्छन्तं नावैक्षत। एवमेकस्मिन् भगवति मनः प्रणिधाय योगी वस्त्वन्तरं न पश्येत् ॥ १०५ ॥

---

(१) "निराशः सुखी पिङ्गलावत्" सांख्य द ४। ११ सूत्रम।

(२) "श्येनवत् सुखादुःखी त्यागवियोगाभ्याम्" सांख्यदर्शन ४। ५ सूत्रम।

(३) "बहुभिर्योगे विरोधो रागादिभिः कुमारी-शङ्खवत्" सांख्य द ४। ८ सूत्रम।

गुप्तिसिद्धौकाः ॥ १०६ ॥
धृतनिश्चयः ईशस्यैककर्त्तृत्वे ॥ १०७ ॥
ध्यातुर्ध्येयात्मना स्थितौ ॥ १०८ ॥
देहास्वत्वे च ॥ १०९ ॥
( एतेऽष्टावुत्तमाः ) पुरुषः क्रियते गुरुभिः क्रमात्।
उपायत्वेऽन्तरङ्गास्ते क्रमात्त्रिस्कन्धता ततः ॥ ११० ॥

गुप्तिरिति। सर्पेण। गुप्तसिद्ध ओकोगृहं यस्य स तथा। यथा सर्पो गृहाननारभमाणः परवेश्मस्वेव सुखमारमेत (१)। तथा मुनिः स्वयं स्यादित्यर्थः॥ १०६ ॥

धृतेति। ऊर्णनाभिना। स यथा स्वस्मादूर्णामाकृष्य वहिर्वितत्य कञ्चित्कालं क्रीडति। पुनस्तां ग्रसते। एवमेक एवेश्वरः स्वमाययैव चेष्टते नान्य इति धृतनिश्चयः स्वयं स्यात् ॥१०७॥

ध्यातुरिति। धृतनिश्चयः सुपेशस्कृता यथा पेशस्कृता कीटः कुड्यान्तेन प्रवेशितः तद्ध्यानात् पूर्व्वरूपात्यागेन एतत् स्वरूपं स्यात्। तथा कामादिभिरुपायैर्भगवद्ध्यानाद् ध्याता तादूप्य यातीति धृतनिश्चयः स्वयं स्यात् ॥ १०८ ॥

देहेति। धृतनिश्चयः देहेनादेहे चास्वत्वमनात्मीयत्वबुद्धिस्तस्मिन्, देहो हि जन्ममृत्युयोगात् स्वस्मिन् अनात्मीयत्व बोधयति। एतेऽष्टावुत्तमाः ॥ १०९ ॥

पुरुष इति। तानेव गुरूनाह। "पृथिवीवायुराकाशमापोऽग्निश्चन्द्रमारविः। कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः॥

(१) "अनारम्भोऽपि परगृहे सखी सर्पवत्" सांख्य ४। १२ सूत्रम।

देहस्य पृथगुद्देशः श्रैष्ठ्यान्नेदिष्ठता कृतात् ॥ १११ ॥
स्वोत्तरा पृथगध्याये द्वितीयैकोनविंशकौ ॥ ११२ ॥
प्रश्नौ प्रागुत्तरेणापि योगं बोधयितुं कृतौ ॥ ११३ ॥

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः । कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् । एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः" (१) । पृथिवीत्यादिना सुपेशं शोभनं रूपं कीटकस्य करोतीति सुपेशकृत् । पेशस्कारोकीटः । उपायत्वेति । उपायत्वे सङ्गत्यागस्य क्रमादन्तरङ्गाः । अतएव हीनमध्योत्तमत्वेन क्रमात् विस्कन्धता तेषाम् । ननु देहश्चेद् गुरुः किमेतेष्वेव नोद्दिष्टः तत्राह । देहस्येति । देहस्य पृथगुद्देशः कृतः श्रेष्ठत्वात् कृतः । श्रेष्ठत्व चास्य नेदिष्टतयाऽतिसामीप्येन कृत इतरे विप्रकृष्टाः अयन्तु सन्निकृष्ट इति भावः ॥ ११० ॥

"गुरूणां सन्निकर्षश्च शिष्याणामुपयुज्यते (२) ।" ननु सर्व्वे प्रश्नाः स्वोत्तरैः सह समानाधिकरणाः द्वितीयैकोनविंशत्यौ भिन्नाधिकरणावित्यत्र हेतुः ॥ १११ ॥

क स्तत्राह,—स्वोत्तरेति । द्वितीयः सत्सङ्गासङ्गप्रश्नः । एकोनविंशकश्चाभिमाननिवृत्तिप्रश्नः । एतौ स्वोत्तरान् निजादुत्तरात् पृथक् भिन्नेऽध्याये कृतौ किमर्थं प्रागुत्तरेणापि पूर्व्वाध्यायदत्तेनोत्तरेणापि योग सम्बन्धं बोधयितुम् ॥ ११२ ॥

किं चान्ये प्रश्नाः उद्धवेन स्वबुद्धैव कृताः । प्रथमादयस्तु षडु-

(१) भागवतम् ११ । ७ । ३५ श्लोक ।

(२) मुण्डकोपनिषत् २ । १२ श्लोक । —"तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणि श्रोत्रियं ब्रह्मनिष्ठम" ।

( अथैषां द्वाविंशतिप्रश्नानां सङ्गतिमाह ) ॥ ११४ ॥
निःसङ्गता कथं कीदृग्तान्निर्वाहश्च यैर्यया ॥११५॥
भक्तेर्यो विषयस्तस्मिन् सत्यन्यस्मिन् रतिः कथम् ॥११६॥
सा कथं भक्तितुल्यं किं कथं भक्तिगुणोर्ज्जिता ॥११७॥
यैर्यैः कामार्थधर्म्मेषु यैर्मोक्षेऽन्तर्वहिर्भवैः ॥ ११८ ॥
ते कीदृशाः श्रुतिभक्तिः परा च स्मृतयः कथम् ॥११९॥
कीदृग्भक्तः कथं दौःस्थ्यमभिमानक्षयः कथम् ॥१२०॥
कि कर्म्मज्ञानभक्तीनां सूचितानां पुनः पुनः ।१२१॥
सर्व्वेऽपि देशसाराणां स्वरूपमिति सङ्गतिः ॥ १२२ ॥

त्यापनपूर्व्विकाः। त्वन्तु सर्व्वं परित्यज्येत्यादिवाक्यैर्भगवतोद्धवस्या-काङ्क्षामुत्थाप्यकारिता। अथेति ॥ ११३ ॥

निःसङ्गत्यादिचतुर्भिः। निःसङ्गता कथमित्येवमर्थं प्रथम-प्रश्नः। सा च कीदृशीति द्वितीयः। तस्यानिर्व्वाहश्च यैः स्यात् ते के इति तृतीयः। यया चानुष्ठिततया तन्निर्व्वाहः सा केति चतुर्थः। यस्य भक्तेर्विषय ईश्वराख्यस्तस्मिन्नेव सति सद्रूपे जीवे चेतन्ये सति प्राणिनामन्यस्मिन् वस्तुनि रतिः कथमिति पञ्चम-षष्ठौ। ईश्वरस्यैव शरीरावच्छेदाज्जीवत्वम्। अतएव स्वसृष्टा-नुप्रविष्टोऽसावित्युक्तम्। अतस्तस्मिन् एव चैतन्यरूपे रतियुक्ता तदुक्तम्। "भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया, तदध्यवस्यत् कूटस्थे रतिरात्मन् यतो भवेत्" (१)। इति

(१) भागवतम् २। २। ३४ श्लोक।

सप्तमः ॥ १२३ ॥

अष्टमः ॥ १२४ ॥

नवमः ॥ १२५ ॥

दशमैकादशद्वादशाः ॥ १२६ ॥

इति श्रीहरिलीलायां वोपदेव कृतौ एकादश-स्कन्धविवरणम् ॥

---

कूटस्थः क्षेत्रज्ञः हरिरित्याद्युक्तं टीकायाम्। सा रतिः कथमिति ॥ ११४—१२२ ॥

सप्तम इति। गुणचित्तत्यागात् क्षेत्रज्ञे रतिरित्यर्थः। भक्तितुल्यमपरं किमिति ॥ १२३ ॥

अष्टम इति। भक्तिरेव भक्तितुल्या नान्यत् इति भावः ॥१२४॥

निर्गुणे वस्तुनि भक्तिः कथं कार्य्येति। नवम इति। साकारद्वारेति भावः। कामार्थधर्मेषु मध्ये यैर्येरुपायैर्निर्गुणे भक्ति स्यात् ते के इति ॥ १२५ ॥

दशमेति। तत्र कामाः सिद्धयः काम्यन्तु इति व्युत्पत्त्या तासु भक्तिर्हेतवस्तथा। "तासामष्टौ मत्प्रधाना" (१)। इत्यनेनोक्ताः। अथ विभूतयः। ता अपि भक्तिर्हेतवः। "केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया" इत्युक्तत्वात् (२)। धर्मोऽपि भगवत्यर्पितो रतिर्हेतुः। यैस्तान्तरङ्गैर्बहिरङ्गैश्च रतिः स्यात् ते के

(१) भागवतम् ११। १५। ३ श्लोक।

(२) गीता १०। १७ श्लोक।

इति त्रयोदशचतुर्द्दशौ। तत्रान्तरङ्गा ज्ञानादयः। बहिरङ्गा- यमादयः (१)। आसन्नोपकारकत्वात्। श्रुतिर्भक्तिपरा कथमिति पञ्चदशः। कर्म्मणामन्तःकरणशुद्ध्यर्थं विधानादि (२) इति भावः। स्मृतयश्च कथं भक्तिपरा इति षोड़शः। स्मृतयोऽत्रयादादि- तन्त्राणि १। ते हि वेदस्थमेव तत्त्वभेदं स्मरन्ति। तत्त्वानां हेयोपादेयविभागेन व्यवस्थापनादेकस्मिन् भगवत्तत्त्वे पर्य्यवसान- मिति स्मृतीना भक्तिपरत्वम्। भक्तः कीदृशः इति सप्तदशः। प्रकृत्यपेतः पुमानित्यर्थः। अस्य च जन्ममृत्युभयं कथमित्य- ष्टादशः। मनो धर्मेष्वभिमानाभावादित्यर्थः। अभिमानक्षयः कथमित्येकोनविंशः मनः शत्रोर्जयात्तज्जयः इत्यर्थः। कर्म्म- ज्ञानभक्तीनां बहुधोक्तानां सर्व्वश्रेष्ठानां किं स्वरूपमिति विंशादय- स्त्रयः। तत्त्वज्ञानं प्रकृत्युपगूढ़ेन पुंसा विश्वमधिष्ठितमिति इतरे प्रसिद्धे॥ १२६॥

इति वोपदेवविरचित-हरिलीलायां मधुसूदनसरस्वती- प्रणीतमेकादशस्कन्धविवरणम्॥

इत्येकादशोऽध्यायः॥ ११॥

(१) त्रयमन्तरङ्गं पूर्व्वेभ्य। तदपि बहिरङ्गं निर्व्वीजस्य। पातञ्जल द— ३।२।४—८। सूत्रम्।

(२) "नित्यनैमित्तिकैरेव कुर्व्वाणो दुरित क्षयम्"।

"महा यज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु." मनुः—

स्मृतयो हि श्रौतगृह्य सूत्राणि, महर्षि मन्वादिप्रणीतधर्म्मशास्त्राणि च।

आश्रयो द्वादशस्कन्धे त्रयोदशभिरीरितः ॥ १ ॥
आश्रयश्च परं ब्रह्म परमात्मा रमापतिः ॥ २ ॥
यतः प्रपञ्चधीस्तत्र सर्पे स्रग्धीरिवाश्रिता ॥ ३ ॥
उपादेयाऽनुपादेया वाश्रयाश्रयिनौ च तौ ॥ ४ ॥

एवं तृतीयादिषु सर्गादीन् नवभेदानुक्त्वा क्रमादाश्रयो द्वादशे उच्यत इत्याह । आश्रय इति । स्पष्टमस्यार्थः ॥ १ ॥

आश्रयलक्षणमाह । आश्रयश्चेति । निर्गुणन्तत्त्वं ब्रह्म । त्रिगुणं परमात्मा । सत्त्वगुणं रमापति. । ब्रह्मादिशब्दवाच्यं यद्वस्तु स आश्रयः । एवमेव हि तत्त्वं त्रिभिः शब्दैरुच्यते । तदुक्तं "वदन्ति तत् तत्त्वविदस्तत्त्वंयज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" (१) इति । एतच्च तथैव टीकायां व्याख्यातम् । साकारयोरप्याकारतिरोहितत्वान्न भेद इत्यर्थः ॥२॥

नन्वद्वये वस्तुनि आश्रयशब्दप्रवृत्तौ किन्निमित्तमिति तत्राह । यत इति । यतः यस्मादनिर्व्वाच्य-प्रपञ्चधीस्तस्मिन् ब्रह्मण्यधिष्ठाने आश्रिता अध्यस्ताः (२) । यथा सर्पे स्रग्बुद्धिः । प्रतीतिव्यतिरेकेण प्रपञ्चस्याभावात् स्रग्धीरित्युक्तम् । यदुक्तम् "आभासश्च निरोधश्च यतश्चाध्यवसीयते । स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते इति" (३) ॥ ३ ॥

उपादेयेति । आश्रय उपादेयः । आश्रयी प्रपञ्चो हेयः । अतोऽत्र प्रकरणद्वयमित्यर्थः ॥ ४ ॥

---

(१) भागवतम् १ । २ । ११ श्लोक. ।

(२) अध्यस्ता —अध्यासलक्षणलक्षिता., तच्च 'अतस्मिंस्तद्बुद्धि' रिति । यथा रज्ज्वांसर्पज्ञानम् ॥ शाङ्करभाष्यम् १ । १ । १ सूत्रम् ।

(३) भागवतम् २ । १० । ७ श्लोक. ।

**अतश्चतुर्भिरध्यायैरनुपादेयतोदिता ॥ ५ ॥**
**उत्तरोत्तरदु:स्थत्वात् स्थापकानां स्थितेरपि।**
**युगे युगेऽन्यथा भावाः कालग्रस्ततया तथा।**
**उपादेयत्वमेकेन परीक्षित् फलदर्शनात् ॥ ६ ॥**
**श्रवणं मननं ध्यानं चेत्युपादानहेतवः।**
**तत्र श्रवणसिद्धार्थं द्वाभ्यां शब्दस्य सम्भवः ॥ ७ ॥**
**वेदोपवेदभिन्नस्य ॥ ८ ॥**
**उपवेदः पुराणान्तत् सम्भवः सप्तमे।**
**मार्कण्डेय कथा त्रिभिः ॥ ९ ॥**

तत्रादौ हेयमाह। अत इति। स्पष्टम् ॥ ५ ॥

अध्यायार्थानाह। उत्तरेति। स्थापकानां राज्ञां उत्तरोत्तरदौर्ब्बल्यम्। प्रथमे स्थितेरायुर्बलादिरूपाया द्वितीये प्रतियुगमन्यथा भावस्तृतीये। कालग्रस्त्त्व चतुर्थे। तच्च निरोधतयाक्रान्तत्वात्। एभिरेव हेतुभिः। प्रपञ्चस्येति। अयं पञ्चमार्थ: ॥ ६ ॥

अथाश्रयप्राप्तावुपायानाह। श्रवणमिति। श्रवणादयोऽपि तत्त्वसाक्षात्कारं जनयन्ति। लक्षणान्त्वेषा प्रागुक्तम। तत्र श्रवणमाह। तत्रेति। वेदेति। "श्रोतव्यः श्रुतिवाक्येभ्यः" (१) इत्युक्तत्वात्। श्रवणं वेदशब्दसापेक्षम्। तत्र वेदसम्भवः षष्ठे। उपवेदः पुराणं तत्सम्भवः सप्तमे ॥ ७—८ ॥

**मननमाह। मार्कण्डेयेति। तत्राष्टमे मार्कण्डेयस्य विष्णुवीक्षा।**

---

(१) "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि।
मत्वा च सततं ध्येय एते दर्शनहेतव ॥" सांख्यदर्शनभूमिका १।१।२।

विष्णुमाया शिवेच्छाभिर्भिन्ना मननसिद्धये १० ॥
मूर्त्तेस्तत्त्वं सूर्य्यगत्वमेकेन ध्यानसिद्धये ॥ ११ ॥
पुराणार्थोपसंहार एकेन तद्भिदाश्रय: ॥ १२ ॥
अष्टादशदशत्रिंशद्‌द्वाधिका नव विंशति: ।
षड्‌विंशतिर्दश नव पञ्चभि: सहिता दश ॥ १३ ॥

नवमे मायेच्छा । विष्णिवति । दशमे शिवेच्छेत्यर्थ: । अयमर्थ: । यथा मार्कण्डेयस्य प्रथमं हरेर्दर्शनं ततो मायाया: शिवस्येति वृत्तम् । तथा मननं कुर्व्वत: प्रथमे परोक्षत्वाधिगम: पुनरसम्भावना-विपरीतभावनाभ्यां तत्रैव भ्रम: । ततो मनन-दार्ढ्येण तन्निरासे पुनरपरोक्षत्वाधिगम इति सुहृदयाश्चेह प्रमाणम् ॥ ८—१० ॥

ध्यानमाह । मूर्त्तेरिति । एकादशे भगवन्मूर्त्तेस्तत्त्वं सूर्य्य-मण्डलाधिष्ठातृत्वञ्च (१) ध्यानार्थमुक्तम् ॥ ११ ॥

पुराणार्थेति । द्वादशे ( भागवत ) पुराणार्थोपसंहार: । एकेन तद्भिदाश्रयोऽष्टादशपुराणानां ब्राह्म पाद्मादीनां(२) भिदाभेद: ॥१२॥

एवमाश्रय विविच्य सर्व्वस्कन्धेष्वध्यायान् गणयति । अष्टा-दशेति ॥ १३ ॥

(१) "ध्येय सदा सवितृमण्डलमध्यवर्त्ती नारायण: सरसिजासन-सन्निविष्ट । केयूरवान् कनककुण्डलवान् किरीटी, हारी हिरण्मयवपुर्धृत-शङ्खचक्र ॥ इति श्रीभगवद्ध्यानम् ।

(२) "ब्राह्मं पाद्मं वैष्णवञ्च शैवम्भागवतन्तथा, तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् आग्नेयमष्टमञ्चैव भविष्यन्नवमं स्मृतम् । दशमं ब्रह्मवैवर्त्तं लैङ्गम् एकादशन्तथा । वाराहं द्वादशञ्चैव स्कान्दं त्रयोदशं स्मृतम् । चतुर्द्दशं वामनकं कौर्म्मं पञ्चदशं स्मृतम्, मात्स्यञ्च गारुड़ञ्चैव ब्रह्माण्डञ्च तत: परम्" ॥ इत्यष्टादशपुराणानि स्कान्दोक्तानि । शिवरहस्य सम्भवकाण्डे ( २ । २० । २८

विंशतिस्त्रिभिश्चतुर्भिश्च स्वाङ्कैकविंशच्चयोदश।
इति भागवतेऽध्याया एकत्रिंशच्छतत्रयम् ॥ १४ ॥
एकादिनियमे नैतानभ्यसेच्छक्तितोऽन्वहम् ॥ १५ ॥
वक्ता श्रोतर्य्यथो श्रोता वक्तर्य्यन्यत्र चिन्तकः ॥ १६ ॥
शास्त्रे स्कन्धे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे।
गुरूपदिष्टो योऽर्थस्तं विमृशन् विष्णु तत्परः ॥ १७ ॥

विंशतिरिति। सर्व्वसंख्यामाह। इतीति। एकस्त्रिंशदधिका यस्मिन् शतत्रये तत्तथा। स्पष्टमन्यत् ॥ १४ ॥

अत्रैव स्वानुभूतमभ्यासक्रममाह। एकादीति। स्पष्टम् ॥१५॥

वक्तेति। स्वाधिके च वक्तर्य्युपस्थितेऽभिमानन्त्यक्त्वा स्वयं श्रोता भवेत्। उभयाभावे स्वयमेव शास्त्रार्थं चिन्तयेत्। इत्येषाऽभ्यासप्रक्रिया। एतच्च "शृण्वन्ति गायन्ति गृणन्ति माधव" (१) इत्यत्र स्पष्टीकृतमाचार्य्येण ॥ १६ ॥

किञ्च शास्त्रेति। गुरूपदिष्टोऽर्थः तमेवानुसन्दधानःपुमान् विष्णुतत्परः स्यात्। तत्र शास्त्रादीनां चतुर्णामर्थं इहैवोक्तः। वाक्यपदाक्षराणान्तु टीकायाम् (२)। एवं सर्व्वासामेकवाक्यतापश्यन् विष्णुसायुज्यमेतीत्यर्थः। अक्षरं पदावयवः। प्रकृत्यादिरूपो विष्णुरित्युक्तम् ॥ १७ ॥

—अन्यथा पुराणलक्षणं वर्णितमस्ति। तथा श्रीमधुसूदनीये प्रस्थानभेदे चान्यथा क्तोति। इतोऽन्यान्युपपुराणानि बहूनि सन्ति।

(१) भागवतम् १।५।११ श्लोक। (२) श्रीमच्छ्रीधर्य्या टीकायामित्यर्थः।

**एकन्तेजस्त्रिधा यद्वत् सूर्य्यमण्डलरश्मिभिः ।**
**एकं ब्रह्म त्रिधा तद्वद्विष्णुमाया विनिर्म्मितम् ॥१८॥**
**मण्डला न्निर्गते सूर्य्ये नैकत्वं रश्मिता यथा ॥ १९ ॥**

तत्सायुज्यत्वमत्यन्तं जीवानां भिन्नत्वे विष्णुसायुज्यानुपपत्तेस्तत्राह । एकमिति । अयमर्थः । यथैकमेवाविशेषितं ज्योतिरुपाधिवत् सूर्य्यादिभेदेन त्रिधा तथैकमेव ब्रह्म विष्ण्वादिभेदेन । तत्रानवच्छिन्नं चैतन्यं विष्णुः (१) । मायेति । मायावच्छिन्नमीश्वरः । माया तद्वतोरभेदोपचारान्मायेत्युक्तम् । अविद्यावच्छिन्नमात्मा । यदाहुः "कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः । कार्य्यकारणता हित्वा पूर्णबोधोऽवशिष्यते" ( २ ) इति । इत्थमेवेदं व्याख्येयम् । यथा श्रुतौ तु मायाया जड़त्वाद् निर्व्वाच्यत्वमवाच्यत्वादिदोषैर्ब्रह्मत्वानुपपत्तिः । जीवेश्वरयोः प्रतियोगित्वादनवच्छिन्नस्य तृतीयत्वे घटाकाश महाकाशयोः प्रतियोगित्वादिव महाकाशस्य सूर्य्यदृष्टान्तस्त्वस्तित्त्वमात्रे एव न तु साकारत्वे ॥ १८ ॥

ननु कथन्तर्हि जीवानामनेकत्व तत्राह । मण्डलादिति । मण्डलान्निर्गते तेजोद्वारा वहिः प्रसृते सति यदनेकत्वं सा यथा रश्मिता मता । एवं मायाया इति । मायोपाधेरीश्वरात् (३)

(१) मायानवच्छिन्नं शुद्धमित्यर्थ ।

(२) " आनन्दमय-विज्ञान-मया वीश्वर जीवकौ ।
मायया कल्पितावेतौ ताभ्या सर्व्वं प्रकल्पितम ॥" पञ्चदशी ६।१२६ श्लोक ।
"ईक्षणादि प्रवेशान्ता सृष्टिरीशेन कल्पिता ।
आग्रदादिविमोक्षान्त. संसारोजीवकल्पित ॥ 'पञ्चदशी ६।१२७ श्लोक ।

(३) "मायान्तु प्रकृतिम्विद्यान्मायिनन्तु महेश्वरम्' श्वेताश्वतर-उ ४।१० श्लो ।

यथा नयनसम्बन्धाद् द्रष्टारो रश्मयो रवेः।
तथा ज्ञातार आत्मानो देहसम्बद्धतो हरेः॥ २०॥
विशेषतस्तु यदात्मानश्चेतनत्वादुपासते।
विष्णुमायान्तरप्राप्तदुरवस्था निवृत्तये॥ २१॥
उपासनं कर्म्मभक्तिज्ञानयोगैस्त्रिधा क्रमात्॥ २२॥

सकाशाद्विष्णोर्निर्व्विशेष चैतन्ये निर्गतेऽविद्या प्रदेशेषु प्रतिफलिते सति यदनेकत्वं सात्मता। अयमर्थः प्रथमं मायायां पतितं निर्व्विशेष चैतन्यस्य महत्प्रतिविम्ब मीश्वरशब्दार्थः। ततोऽविद्या प्रदेशेषु (विच्छेदेषु) पतितानि सहस्रशः चित्-प्रतिविम्बानि जीवशब्दार्थ इति॥ १९॥

ननु जीवानां विष्णुंशत्वेऽपि विष्णुज्ञान नोपपद्यते कर्म्मकर्त्तृत्व भाव विरोधादिति चेत्तत्राह। यथेति। तथा ज्ञातार इति। रवेरेव रश्मयः चक्षुषि संक्रम्य रवि पश्यन्ति। तथादेह सम्बन्धात् आत्मानो विष्णुमित्यर्थः (१)॥ २०॥

एवं रश्मिदृष्टान्ताज्जीवानां सर्व्वथा तत् साम्ये प्राप्ते वैलक्षण्य-माह। विशेषइति विष्णुमायेति। अयं रश्मिभ्यो जीवानां विशेषः। यत्ते चेतनत्वाद्विष्णुमुपासते किमर्थं मायायामन्तरेण जीवेश्वरयोर्व्यवधाने प्राप्ता या दुरवस्था जन्मादिरूपा। (तत्) निवृत्त्यर्थमुपासत इत्युक्तम्॥ २१॥

ततोपायमाह। उपासनमिति। स्पष्टमस्यार्थः॥ २२॥

(१) विष्णुर्व्यापको विभुः, स च विकल्पोज्झितः।
तथा चाद्वैतसिद्धिप्रारम्भे "विष्णुर्विकल्पोज्झितः॥" इति।
वेवेष्टि इति विष्णुर्व्यापकः। इति तत्रगुरुचन्द्रिका।

येषां धीर्विषयेऽदोषा सदोषा नैव तैः कृताः ॥२३॥
कर्म्मणामर्पणं विष्णौ विष्णोर्वार्त्ता परस्परम्।
विजने चिन्तनं विष्णोर्योगानां लक्षणं क्रमात् ॥२४॥
इति भागवतस्यानुक्रमणी रमणी कृता।
विदुषा वोपदेवेन भिषक् केशवसूनुना ॥ २५ ॥

इति श्रीहरिलीलायां वोपदेवकृतौ द्वादश-
स्कन्धविवरणम् ॥ १२ ॥

---

श्रीमद् वोपदेवकृत-हरिलीलासमाप्ता ॥

---

तेषु क्रमादधिकारिण आह। येषामिति। येषा धीर्विषयेऽदोषा दोषशून्या तैरकर्म्मयोगेन भगवदुपासनं कृतम्। येषान्तु सदोषा विषयेषु दुष्टज्ञानमस्ति नतुतेषात्याग इति सदोषत्वं तैर्भक्तियोगेन। येषां तु नैव विषयेषु बुद्धिर्नास्त्येव तैर्ज्ञानयोगेनेति। तदुक्तम्—

"निर्व्विसानां ज्ञानयोगो कर्म्मयोगस्तु कामिनाम्।
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥" (१) ॥
न निर्व्विसा नातिसक्तो भक्तियोगोऽस्य सिद्धिदः। इति ॥२३॥

अथैषामुपायानां क्रमाल्लक्षणमाह। कर्म्मणामिति। स्पष्टम् ॥२४॥

एवं दशविधेति। इति भागवतेति। स्पष्टमस्यार्थः ॥ २५ ॥

---

(१) "निर्व्विस्यानां ज्ञानयोगो न्यासिनामिह कर्म्मसु।
तेष्वनिर्विण्णचित्तानां कर्म्मयोगस्तु कामिनाम् ॥
भागवतम् ११। २०। ७—८ श्लोकः।

हरिलीलेति नामेयं हरिभक्तैर्विलोक्यताम्।
अस्या विलोकनादेव हरौ भक्तिर्हि वर्द्धते ॥ १ ॥
अतत्त्वे तत्त्वधीर्येषां तत्त्वे चातत्त्वधीर्नृणाम्।
न तानानन्दयन्त्येता वोपदेवस्य सूक्तयः ॥ २ ॥
हरिलीलाविवेकोऽयं रामराजस्य वेश्मनि।
कटके (कराटके) रचयाञ्चक्रे तुष्ट्यै हेमाद्रिणा सताम् ॥३॥

---

यस्य व्याकरणे वरेण्य घटनाः स्फीताः प्रबन्धा दश,
प्रख्याता नव वैद्यकेऽपि तिथिनिर्द्धारार्थमेकोऽद्भुतः।
साहित्ये त्रय एव भागवततत्त्वोक्तौ त्रिकस्तथा,
भव्याद् वाग्मि-शिरोमणेरिह गुणाः के के न लोकोत्तराः ॥४॥
लक्ष्म्या सुवर्णलतया वपुषि प्रकाण्डे,
श्लिष्टस्तनस्तवक निर्म्मितया नितान्तम्।
सच्छायकः शितिरुचिफलितस्तमाल-
स्तापं व्यपोहतु भवार्क(ब्धि) भवं हरिर्नः ॥ ५ ॥
सरस्वती श्रीमधुसूदनेन निर्व्यूढमेतद्बुधमोदनेन।
जनः समस्तोऽपि रमादनेन व्रजेशभक्तिं व्रजतादनेन ॥ ६ ॥

समाप्तश्चायं श्रीहरिलीलाविवेकः॥

---

(१) कविकल्पद्रुमे काव्यकामधेनौ च।
(२) कैवल्यदीपिका मुक्ताफलटीकायां, चतुर्वर्गचिन्तामणौ, राजप्रशस्तौ च।
(३) अद्वैत सिद्धान्ते (शेषपरिच्छेदावसाने)।